# सुहासिका



डॉ० शिवस्वरूप तिवारी

# सुहासिका

रचनाकारः

डॉ0 शिवस्वरूप तिवारी

रसैर्युता भावमयी विलासिका,
विनैव शुल्कं निरुजप्रदायिका।
सर्वाधिहन्तुं सततं समुद्यता,
प्रहर्षिकाऽऽनन्दप्रदा 'सुहासिका'।।

# SUHASIKA (SANSKRIT KAVYAM)

By Dr. SHIVA SWAROOP TIWARI

प्रथमसंस्करणम् – 2010 ई0



प्रकाशकः

**कुमार–प्रकाशनम्**

लखनऊ रोड, हरदोई (उ0प्र0) 241001

फो0 (05852) 220718 मो0 : 9450577133

मुद्रकः वितरकश्च

विमा प्रिन्ट्स एण्ड पैकेजेज प्रा0 लि0

C 1, नघेटा इण्डस्ट्रियल स्टेट,

हरदोई (उ0प्र0) 241001

मो0 : 9919949000

प्राप्तिस्थानम्

**श्री सरस्वती सदन**

सिनेमा रोड, हरदोई (उ0प्र0) 241001

रचनाओं में प्रयुक्त सभी नाम व परिस्थितियाँ काल्पनिक हैं।

मूल्य–रु0 150–00



# समर्पणम्



उन्नावजनपदान्तर्गत 'पड़रीकलाँ' इति ग्रामवासिनां

पुण्यश्लोकानां मानसमर्मज्ञाणां सामवेदिनां

**पं० रामस्वरूप तिवारी**

इत्याख्यानां पितृचरणकमलयोः।

डॉ0 कृष्णकुमार अवस्थी
पूर्व रीडर एवं अध्यक्ष, संस्कृत विभाग
सी0 एस0 नेहरू कॉलेज, हरदोई

नुमाइश चौराहा
साण्डी रोड, हरदोई
फो0 – (05852) 234156

# सम्मतिः

नवनवोन्मेषशालिनी प्रतिभा एव काव्यस्य हेतुः। शिवत्वस्यानुभूत्या भवति प्रतिभायाः प्रादुर्भावः। साऽनुभूतिः हि शिवस्याभिन्नतत्त्वम्; सहृदयजनस्य लोकोत्तरानन्दप्रदायिनी शक्तिः। यदा व्यक्तिः शिवतत्त्वं मनसि अनुभवति तदा नन्दति; आनन्दोऽयमेव विविधरसरूपेषु प्रादुर्भवति विलसति च। काव्यमर्मज्ञैः एते रसाः श्रृंगारवीरप्रभृतिसंज्ञया वर्णिताः किन्तु एते सर्वान्नन्दयितुं न समर्थाः। श्रृंगारादयः रसाः केवलं तानेव मोदयन्ति ये सुखिनः परिपूर्णाः। केवलं हास्यरसः सर्वदा सर्वजनान् आनन्ददाने समर्थः। हास्य–व्यंग्यमाध्यमेन संम्प्रेषिताः वैदग्ध्यभंगीभणतयः सहजरूपेण सर्वेषां मानसपटलेषु प्रविशन्ति आह्लादयन्ति च। श्रोतारः सहृदयाः इमाः भणितीः भूयो भूयो स्मरन्ति, स्वचिन्तनविषयेषु समानीय विवेचयन्ति च।

पुराकाले युगानुसारेण बहूनि भावात्मकानि काव्यानि विरचितानि तदनन्तरं भावकलयोः मिश्रणं ततः कलापक्षस्य प्राधान्यमभवत्। शिल्पचमत्कारजन्यकाठिन्यमनुभवन्तः सामान्यजना एतादृशकाव्यतो दूरंगताः। केवलं विशिष्टजनबोध्यकाव्यानि नातिदीर्घजीवनं लभन्ते। सामान्य–जनबोध्यतैव काव्यस्य सार्थकत्वम्। केवलं लोकानुरंजकं लोकभाषासमन्वितं सहजबोधगम्यं शिल्पजन्यकाठिन्यपरम्पराभंजकं किंचित्काव्यमेवैतदर्थं पूरयितुं समर्थो भविष्यति। लोकरुचिरक्षणे चेत्केचनभाषाव्याकरणदोषाः जायन्ते, ते अगणनीया अदृश्याः तिष्ठन्तु; विचारसम्प्रेषणमेव प्रधानं स्यात्। अनेनैव विचारेण संस्कृतं पुनः जनभाषा भवितुं शक्नोति।

गुरुगम्भीरसंस्कृतकाव्येऽस्ति हास्यव्यंग्यरचनानां न्यूनता। 'सुहासिका' कृतिरियमभावस्यास्य पूरणेऽस्ति सार्थकप्रयासः। डॉ0 तिवारिणा सामाजिकविषयाणां चयनं कृत्वा सहजसरलसंस्कृतभाषायां सामान्यजनबोध्यहास्यव्यंग्यकाव्यं विरचितम्। कृतेर्द्वितीयभागे गीतछन्दरचनाऽप्यस्ति मनोहरा। घनाक्षरीछन्दानां पदलालित्यमतीवसुन्दरं; संस्कृते नव्यप्रयोगो वर्तते। पुच्छलश्लोकसूक्तिपूर्तिप्रयोगाश्च प्रशंसनीयाः। कामये कृतेरस्याः साहित्यजगति प्रभावशालिप्रवेशो भवेत्।

दीपमालिका, 2066 वि0

डॉ0 (कृष्ण कुमार अवस्थी)

आचार्य डॉ0 शिवशरण सिंह चौहान
प्राचार्य
श्री शिव संकटहरण संस्कृत महाविद्यालय
सकाहा, हरदोई (उ0प्र0)

धर्मशाला रोड, हरदोई
दूरभाष सं0-223293

# अभिमतम्

कवेर्भारती नवरसरुचिरा, ह्लादैकमयी भूत्वा जनानन्दयति। नवरसमध्ये हासो नवोर्जा विदधाति मानवेषु। यथा हि---

'प्रोक्ताः षड्रसाः लोके साहित्यं च नवान्वितम्।
हास्योऽभिमतो लोके सर्वत्रानन्ददायकः।।'

मन्मते हास्यरसो मुख्यः। रसोऽयं सर्वजनहिताय सर्वजनसुखाय सर्वजनप्रियाय च नाऽत्र सन्देहलेशावकाशः। साहित्ये येऽन्याः रसास्ते तु तत्तत्स्थानेष्वेव फलिताः परन्तु हासः सर्वत्रानुस्यूतः। हास्येन स्वास्थ्यवृद्धिरपि जायते। सम्प्रति यत्र-तत्र हास्यसंस्थाः स्थापिताः वर्तन्ते तत्र हास्यमाध्यमेन रोगोपचारोऽपि भवति। अतएव नाटकेषु चलचित्रेषु नृत्येषु सर्कसादिषु विदूषकरूपेणास्य समायोजनं दरीदृश्यते। हास्यसाहित्यं लोके महत्स्थानमादधाति। चिन्ताकुलसमाजे साम्प्रतमेतस्य महत्यावश्यकता विद्यते। हास्यं श्रुत्वा हसन्ति जनास्तदोत्फुल्लता जायते हृदये तया रक्तशुद्धिः सम्यक् च रक्तसंचारस्तेन स्वास्थ्यवृद्धिर्भवति। इत्यर्थं काव्यशास्त्रविनोदाय च डॉ0 तिवारिणा विरचिता कृतिरियम्। मया दृष्टा, पठिता, विलोकिता विचारिता च।

कृतेः प्रथमे भागे विविधविषयानवलम्ब्य कविना यत्प्रयासः कृतस्तत्तु साम्प्रतिकः श्लाघ्यश्चास्ति। अत्र तु कविः क्वचिद्धासेन, क्वचित्प्रहासेन, क्वचिदट्टहासेन, क्वचिच्चस्मितहासेन रञ्जयति लोकान्। औपकार्यमिदं कवेः समाजं प्रति। अत्र हास्यकाव्ये कविना प्रचलिताधुनिकनागरग्राम्यशब्दानां प्रयोगं विधाय नवप्रयोगो विहितः।

एतेन साहित्ये शब्दसमृद्धिरपि भविष्यति। यथा-पचनौलवटी, भुरता, पुलिस, रेल, चाय, बस, ट्रेन, टिकट, कट्टाधारी, नकल, चन्दा, मास्टर, कुर्सी, बैंक, बीमा, लाटरी, खट्ट-पट्ट, रेडियो, क्रीकेट, चौका, छक्कादि शब्दाः प्रयुक्ताः। पश्यन्तु साम्प्रतिकविद्यार्थिलक्षणम्--

'बसट्रेनेषु फिल्मेषु त्यक्त्वा स्वाध्ययनन्तु यो।
विनैव टिकटं याति 'विद्यार्थी'ति निगद्यते।।'
'नकलं' योग्यता यस्य 'चन्दा' चैव धनार्जनम्।
'कट्टाधारी' मनुष्योऽयं 'विद्यार्थी'ति निगद्यते।।

द्वितीयभागे हासेतरविविधविषयानाश्रित्य काव्यरचना विहिता। अत्र घनाक्षरीछन्दानां मधुरगीतानाञ्च भावमयी व्यंजना मनोहारिणी विद्यते। तृतीयभागे मूर्खलक्षणानीति शीर्षकवार्ता प्रकारान्तरेण सदाचारोपदेशः वर्तते। श्रमाध्ययनशीलस्तिवारिमहोदयश्चिन्तको विचारको विवेकी विनयी संस्कृतसंस्कृत्योश्च समाराधक इति। गुणिगणमान्योऽयं बुधजनप्रियः। समुदेत्वस्य भारती भारते भातु मे चेहा। कृतिरियं महीयसी, पटीयसी, गरीयसी च मन्मते। काव्यमिदं विद्वज्जनकण्ठाभरणं भूयादिति प्रार्थये भूतभावनम्।

संस्कृत-दिवसः
सं0 2066 वि0

डॉ0 (शिवशरण सिंह चौहान)

# प्ररोचना

अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथास्मै रोचते विश्वं तथैतत् परिवर्तते।।

संस्कृतवाङ्मये कवीनां महत्त्वं बहुधा वर्णितमस्ति। प्रसिद्धसमीक्षकः आचार्य आनन्दवर्द्धनः एवमालिखति यत्संसारे कविः सर्वथा स्वतन्त्रः। स स्वेच्छया यद् वस्तु यथा निधित्सति तथैव प्रतिपादयति। तं ततः कोऽपि वारयितुं न प्रभवति। यदि कविः शृंगारी वर्तते तदा तस्य काव्ये सर्वं जगत् रसमयं विराजते, नीरसश्चेत् कविः तदा तस्य वर्णनमपि नीरसमेव जायते। सः खलु चेतनमचेतनवदचेतनञ्च चेतनवत् वर्णयितुं प्रभवति——

शृंगारी चेत् कविः काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्।।
भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रस्तथा।।

तत्र कवित्वं प्रशंसन्नाह वेदव्यासः –

नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा।।

सुकविः डॉ0 शिवस्वरूप तिवारी विशिष्टव्यक्तित्वमावहति। सः सहृदयो भावुको गम्भीरः प्रसादोपेतश्च वर्तते। अतएव तस्य स्वच्छप्रसन्नात्मा हास्यवाङ्मयं विलक्षणकाव्यं सम्पुष्णाति। संस्कृतसाहित्ये आधुनिकविषयमाश्रित्य प्रायोऽल्पीयांस्येव काव्यानि रच्यन्ते। यत्र–तत्र क्वचिदेव नूतनान् विषयानधिकृत्य कवयः काव्यानि रचयन्ति। सम्प्रति संस्कृते आधुनिककविभिर्नैकानि काव्यानि रच्यन्ते, अत्र नास्ति मनागपि सन्देहावसरः। परन्तु ते प्रायः पुरातनविषयानाश्रित्यैव प्राचीनशैल्यैव काव्यं तन्वन्ति। संस्कृते नूतनशैल्या काव्यानि प्रणेतुं ते नोत्सहन्ते। सत्यं तु तावदिदमस्ति यत्साम्प्रतमपि अस्माकं संस्कृतकवयः नूतनविषयेषु रुचिं न हि कुर्वन्ति। ते पूर्ववत् गिरिकाननपादपादिविषयेषु काव्यं कुर्वन्ति यथा प्राचीनकविभिः कृतमस्ति। भाषाशैल्यादिदृष्ट्यापि तथैव विधानं वर्तते। हास्यव्यंग्यप्रयोगे तु कवयः प्रायः प्रवृत्ताः न दृश्यन्ते।

मन्ये, संस्कृतसाहित्यविषये एवं विचिन्त्यैव डॉ0 शिवस्वरूप तिवारी हास्यव्यंग्ययोगेन नवविधं हृद्यं मनोरंजकं काव्यमरचयत्। काव्यमिदमनेकदृष्ट्या भृशं महत्त्वं भजते। विविधनूतन–विषयानवलम्ब्य सर्वेषां प्रमोदाय हास्यव्यंग्योपेतां नवां मधुरामद्भुतां रचनां प्रस्तौति सुकविः डॉ0 शिवस्वरूप तिवारी। तदिदं काव्यं नाम नवनवायमानं रुचिरं रसायनं पीयूषमिव प्रीणाति सहृदयानां मनांसि। अस्मिन्काव्यारामे सर्वत्रैव प्रतिभानटी सविलासमभिसरति। हास्यव्यंग्योपेता 'सुहासिका' स्वाभिधानानुसारेण सहृदयान्सद्य एव सुहासेन सह संयोजयति। मन्ये, 'सुहासिका' राजते कविकुलगुरुकालिदासस्य कवितावनिता या विविधैर्भावैर्विलासैश्च मन्दस्मितैःसुशोभते। सा क्वचित् स्मितं, क्वचित् सुस्मितं, क्वचिच्च मन्दस्मितं संतनोति। तस्याः विविधविधस्मितेषु व्यंग्यप्राधन्यं वर्तते,तस्याः सुमधुरव्यंग्यविलासैर्मानसं प्रमोदायते, आनन्दरसार्णवे निमज्जति, परां निर्वृतिं चावाप्नोति। कातराक्षी सुधानना चैषा 'सुहासिका' सततं व्यंग्यवचोभिरमृतं वर्षति, नव्यं हास्यरसञ्च प्रसूते। सा यदा सरसैर्विलासैर्नूतनैश्च भावैःसुविशेषानन्दासवैरुन्मत्तेव विजृम्भते तदा विलक्षणमट्टहासं कृत्वा स्वसुधावदनेन शुभ्रकान्त्या च सहृदयान् समानन्दयति। व्यंग्योपेतां हास्यकविकृतां मंगलकामनां पिबन्तु सहृदयाः —

कन्यका स्वविवाहस्य प्रीत्याऽमंत्रणपत्रकम्।
प्रेषयामास सोत्साहैः पूर्वकालिकप्रेमिणम्।।
प्रतिपत्रे कृता तेन चेत्थं मंगलकामना।
'शुभदिनं लभस्वैतद् जीवने तु पुनःपुनः।।

एवमेव हास्यकविः डॉ0 तिवारी रचनायोग्यतां एवं व्यंग्येनाक्षिपति —

'कस्याः काव्यस्य धारायाः योग्येयं रचना मम,
सम्पृष्टे कविना प्रीत्या सम्पादको जगाद तम्–
"कृतो भूरिश्रमः पूर्वं याहि किंचित् पुनः कुरु,
गंगाधारोपयुक्तेयं गंगायै तु समर्पय ।।"

स्वभावतो बालकाः क्रीडापराः वर्तन्ते। यथा तेभ्यो क्रीडा हि रोचते तथा न विद्यालयः। सुकविरत्र रचयति——

जगाद मातरं बालः साग्रहं विनयान्वितम्।
'विद्यालयं न यास्यामि शृणु मातः कदाचन।।'
त्वयैव कथितं पूर्वं–'परस्थाने गृहेऽपि वा
वारं वारं क्वचिद् याते मानं तत्र न लभ्यते।।

सुकविः डॉ0 तिवारी अस्यां कृतौ आदिकविमहर्षिवाल्मीकिरिव घनाक्षरी–पुच्छलश्लोक–लोकगीतप्रभृतीनि नूतनछन्दांसि प्रयुनक्ति। येन कवेः कवितावनिता पुरातनभावैर्विभूषिताऽपि नूतनाधुनिकलावण्यैः समधिकं ललितायते तेन च पौरस्त्यपाश्चात्त्यसाहित्यिकविलासैः सा भृशं सुस्मितायते। कवेरयं नूतनः प्रयोगः सर्वथाऽभिनन्दनीयः।

एवमस्मिन्काव्ये कविः विविधलोकविषयान् संगृह्य तान् हास्यव्यंग्यमुखेन प्रस्तौति, येन सहृदयः सद्य एवानन्दानुभूतिं कर्तुं शक्नोति। अत्र सर्वत्र कविप्रतिभा सम्यग् विलसति। भाषा–भावयोरुभयोः समीचीनं सामंजस्यं कविकृतवर्णनं हृद्यं रुचिरं सरसं मधुरं च। अत्र सर्वत्र प्रसादगुणस्य संप्रयोगः हास्यव्यंग्यरूपप्रसादं माधुर्येण सह वितरति। अतएव विशिष्टं काव्यमाधुर्यं सततं हृदयमेव संस्पृशति। अत्र काव्यचेतना विलक्षणभावप्रसादैः परमानन्दमाविष्करोति तथा च मानवमानसं निसर्गमानन्दं परां प्रीतिञ्च साध्नोति। अत्र सर्वत्र मधुरहास्यरसप्रवाहः स्यन्दते। सम्पूर्णकाव्ये वैदर्भीरीतिः सविलासमभिसरति।

तदत्र पश्यामि—कवेः नैसर्गिकी प्रतिभा, शास्त्रज्ञानम्, लोकविज्ञानममन्दाभियोगश्च काव्ययोगं सम्यग्वितनुते। कामये, लोकोऽस्य कवेर्भा ्तीं सर्वदा अभिनन्दतु। किं बहुना–

"शिवस्वरूपप्रसादैः रचितेयं 'सुहासिका'।
हासप्रसादं पुष्णातु लोकानां प्रीतिकारिका।।"

शिवा द्विवेदी

डॉ0 शिवबालक द्विवेदी
प्राचार्य
बद्री विशाल कॉलेज, फ़र्रुखाबाद
सम्पादक–नवप्रभातम्, कानपुर

गुरुपूर्णिमा,
सं0 2066 वि0

# प्राक्कथनम्

विश्वस्य प्राचीनतमासु समृद्धभाषासु संस्कृतभाषा समादृता सुप्रतिष्ठिता चास्ति। ऋषिमुनीनामाप्ताभिव्यक्तिभिर्मण्डितेयं भाषा लोके 'देववाणी' इति नाम्ना ख्याता। पुरुषार्थचतुष्टयस्य विविधायामिचिन्तनैः परिपूर्णा भाषेयं लौकिकामुष्मिकचिन्तनानां बृहत्तरपरिधिषु सततं नवनवालेखनैश्चित्रांकनं कुरुते। नवरसरुचिरायाः कविभारत्याः प्रकाशिका देववाणी मानवजीवनं संस्कर्तुं सततं सन्नद्धा समुद्यता च। गीर्वाणभारत्याः काव्यमद्यापि देशस्य दिग्भ्रमितयुवावर्गं सुसंस्कृत्य प्रकाशमार्गे नेतुं समर्थम्। पाश्चात्त्यान्धानुकरणैः स्वगृहे एव संरक्षितायाः कस्तूर्याः सुवासैर्वञ्चितोऽयं समाजः। ज्ञानामृतपूर्णं रसार्णवं त्यक्त्वा भौतिकसुखभोगानां मृगमरीचिकासु परिभ्रमन्नानायातनाः चानुभूय नानाक्लेशग्रस्तोऽस्त्ययं मानवः। रसनिर्भरा कविताऽस्ति मानवमुक्तेः साधनमेकम्।

कविता भावसंकुलमानवहृदयस्यास्ति लोकोत्तरानन्दप्रदायिनी कलात्मिकाऽभिव्यक्तिः। भावबुद्धिकल्पनानां मानवीयसंवेदनानां मनोहारिनिर्मितिभिः मनोजगदाह्लादिनी साऽस्ति चैकाऽद्‌भुतशक्तिः। नवरसोपेतैषा कविता विविधरूपैर्जनान्नन्दयति। सर्वरसानां मध्ये हासश्चास्ति विलक्षणशक्तिसम्पन्नः यः सर्वभेदभावं विस्मृत्य पण्डितानपण्डितानेकरूपतां समानीय रञ्जयति। रसोऽयमस्ति मानवानां मनोरञ्जिजन्याः चित्तवृत्तेश्चरमविकासः। हासो हि मानवेभ्यो विधेः शिवंकरं दरदानं तेषामात्मनां मुक्तिसाधनायां भवति चैतत्पर्यवसानम्। चिकित्सकीयानुसंधानैरिदं प्रमाणितं यद्‌हासोऽस्ति मानवेभ्यो नैसर्गिकस्वास्थ्यप्रदायकः।

मानवजीवनस्योषाकाले सर्वानुभूतयः रोदनं हासश्च रूपे विकसिताः। संसारेऽस्मिन् समागत्य शिशुः प्रथमतः रोदिति शनैः शनैः सः मन्दस्मितिं क्रमशः सुहासं प्रहासमट्टहासमपि जानात्येवं पूर्णानन्दमनुभवति। एवं हासस्य परम्परा स्वस्थविकासस्यास्ति लक्षणम्। सर्वे हसितुमिच्छन्ति न तु रोदितुम्। हासोऽस्ति मानवस्यान्तरिकाह्लादस्य प्रकाशनम्। संस्कृतसाहित्ये हासस्योत्तममध्यमाधमा इति त्रयो भेदाः प्रसिद्धाः। उत्तमस्य स्मितहसिते, मध्यमस्य विहसितोपहसिते,

चाद्धामस्य अपहसितातिहसितेत्युपभेदाः प्रकीर्तिताः। चित्रचरित्रविचारभावभाषादीनामसाम्येनानुकरणस्यासंगत्या च हासो जायते। परिस्थितिव्यवस्थाजन्यासंगतयो हासमुत्पादयन्ति। बहुभोजिनो भोजनव्यसनिनो ब्राह्मणाः, वामनाः, विकृतांगाः, विदूषकाः, दिगम्बरशंकरः, कुब्जा, कृपणाश्च हासस्य परम्परागतविषयानि सन्ति संस्कृत–साहित्ये। यत्र–तत्र विविधविषयानवलम्ब्य स्फुटहास्यरचनाश्च समुपलब्धाः। यथा——

कमले कमला शेते हरः शेते हिमालये।
क्षीराब्धौ च हरिश्शेते मन्ये मत्कुणशंकया।

हासस्य ग्रहणमास्वादनं च भाषायाः अभिव्यंजनाशक्तिमवलम्बितमस्ति। काकुशब्दार्थचमत्कारैरपि प्रभवति हासस्योत्पत्तिः। यथा——

कोऽपि ग्वालः वृद्धां महिषीं क्रीत्वा निजगृहमानीय दुग्धदानायैनां प्रार्थयते। बहुशः प्रार्थ्यमाने सति महिषी तस्याशासु तुषारापातं कुर्वती एवं ब्रवीति——

'भर्ता मे महिषासुरः कृतयुगे देव्या भवान्या हतः
तस्मात्तद्दिनतो भवामि विधवा वैधव्यधर्माश्रिता।
दन्ता मे गलिता नखा विगलिता भ्रष्टं विषाणद्वयं
वृद्धायां मयि गर्भसम्भवकुतः पृच्छन्न किं लज्जसे?

एकस्मिन्स्थाने वेश्यायाः दार्शनिकत्वमवलोकनीयम्——

ब्रह्मैव विश्वमखिलं न हि किंचिदन्यत्
तस्मान्न मे सखि! परस्परभेदभावः।
जारे तथा निजवरे सदृशोऽनुरागः
व्यर्थं किमर्थमसती'ति कदर्थयन्ति।

नानाचिन्ताकुलानां, मानवानां कृते हासस्यास्ति वर्तमानकाले महत्यावश्यकता। धर्मदर्शनाध्यात्मयोगवेदान्तादिगुरुगम्भीरविषयैः परिपूर्णे निर्वेदप्रधाने संस्कृतसाहित्येऽस्ति हासस्यातिन्यूनता, तदभावस्य पूर्त्यर्थमेवास्त्ययं मत्प्रयासः सुहासिकायाः प्रथमभागे। नव्याभिव्यंजनाशिल्पसहितान्याधुनिकविषयाणि कृतेरन्यतमा विशिष्टताऽस्ति। इष्टार्थः सहजरूपेण सम्प्रेषितो भवेदितिहेतवे संस्कृतेतरभाषाणामपि शब्दाः सम्प्रयुक्ताः। भाषाव्याकरणप्रयोगे कवेर्निरंकुशतायाः यत्रतत्र लाभोऽपि लब्धो मया। एवमेव भाषायाः विकासो जायते। यथा——

येषां न कुर्सी न पदं न कारम्
बैंकेषु क्षिप्तं प्रचुरं धनं वा।
ते राजमार्गेषु विनैव बीमां
मनुष्यरूपेण मृगाश्चरन्ति।।

द्वितीयभागे विविधविषयानवलम्ब्य काव्यं विरचितमस्ति। हिन्द्याः रीतिकालस्य लोकप्रियघनाक्षरीछन्दसि विरचिता रचनाः संस्कृते नव्यप्रयोगो वर्तते। सुमधुरगीतानां समुपस्थितिः रसैरनुरंजयत्याह्लादयति च। 'नौमि तं भारतमि'ति रचनायाः एकांशो द्रष्टव्यः ——

यत्र घण्टाध्वनिर्मन्दिरे–मन्दिरे,
मस्जिदेष्वप्यजानध्वनिः श्रूयते।
गान्धिनो रामराजस्य संकल्पना,
यत्र सम्भाव्यते नौमि तं भारतम्।

कृतेर्तृतीयभागेऽस्ति वार्तायुग्मम्। परिशिष्टरूपे प्रथमभागस्य हिन्दी–भावार्थोऽपि सुलभः।

सुहासिकायाः प्रायः सर्वाः काव्यरचनाः आकाशवाण्याः लखनऊकेन्द्रतः प्रसारिताः सन्ति। मम ग्रामवासी सहपाठी सखा डॉ0 कृष्णनारायण पाण्डेयोऽस्त्यविस्मरणीयः यस्य प्रेरणया एवाहं संस्कृते काव्यरचनां कर्तुं तत्परोऽभवम्। गुरुवदादरणीयाग्रजस्याचार्यस्य डॉ0 कृष्णकुमार अवस्थिनः पथप्रदर्शनेनैव मत्प्रयासोऽयं कृतिरूपमवाप्य सार्थकोऽभूत्। एवं कृष्णद्वयस्यास्ति महती भूमिकाऽस्मिन्कविकर्मणि। डॉ0 शिवबालक द्विवेदिना प्रदत्ता प्ररोचना मंगलमूर्तेः प्रसादो भूत्वा सर्वमंगलं विधास्यति। मम सहधर्मिणी श्रीमती आशा तिवारी रचनानामस्ति प्रथमा श्रोत्री, पाण्डुलिपिनिर्माणे तस्याः सहयोगोऽप्यस्ति स्मरणीयः।

साधुरसाधुर्वा प्रयासोऽयं भवत्करकमलयोरस्ति परीक्षणाय। स्वकाव्यरचनाविषये बहु जल्पनं नोचितम्। काव्यमर्मज्ञा रसज्ञपाठकाश्चैनां समीक्ष्य स्वमतं प्रदास्यन्ति। किं बहुना——

मन्दः कविर्यशः प्रार्थी गमिष्याम्युपहास्यताम्।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः।।

हरदोई
वसन्तपञ्चमी, 2010 ई0

डॉ0 शिवस्वरूप तिवारी

# अनुक्रमः

## प्रथमो भागः (हास्यव्यंग्यकाव्यम्)

## द्वितीयो भागः (काव्यविविधा)



## तृतीयो भागः (वार्ताः)



## परिशिष्ट





# प्रथमो भागः
## हास्यव्यंग्यकाव्यम्



### गणेशस्मरणम्

नमस्तस्मै गणेशाय योऽतिभीतः पलायते।
मूषकं वाहनं वीक्ष्य प्लेगाशंकाप्रपीडितः।।

### चमचावन्दनम्

विघ्नेश्वराय वरदाय जनप्रियाय
स्वार्थे रताय नवनीतप्रलेपकाय।
सौम्याय चारणसुताय निजंभराय
सिद्धिप्रदाय चमसाय नमो नमस्ते।।

### श्रोतृवन्दना

नानारसानां नवमिश्रणं यै–
र्निपीयते साहसपूर्वकेण।
जीवन्ति ये प्राप्य कविप्रहारं,
तेभ्यो नमः श्रोतृमहोदयेभ्यः।।

### भ्रष्टाचारस्तुतिः

उत्कोचः परमं मित्रं धूर्तता धर्मसंगिनी।
स्वार्थस्तु गुरुर्यस्य भ्रष्टाचारं भजाम्यहम्।। □

# चायस्तोत्रम्

लक्ष्मणे मूर्च्छिते युद्धे सुषेणेन सुसंस्तुता।
बूटी हनुमता नीता सैव चायेति कथ्यते ।।1।।

## अथ स्तोत्रम्

सर्वानन्दकरी देवी सद्यः स्फूर्तिप्रदायिनी।
कार्यालये गृहे चैव चायदेवि! नमोऽस्तु ते।।2।।

ज्ञानदा शक्तिदा माता सर्वत्रैव सुपूजिता।
त्वां विना स्वागतं व्यर्थं चायदेवि! नमोऽस्तु ते।।3।।

नगरेषु कपं यावद् ग्रामेषु घटमात्रकम्।
पायं पायं प्रहर्षन्ति चायदेवि! नमोऽस्तु ते।।4।।

'लिपटनं' क्वचि'ट्टाटा' क्वचित्'ताज़ा' स्वरूपिणी।
क्वचित्'काफ़ी' स्वरूपाऽसि चायदेवि!नमोऽस्तु ते।।5।।

उत्सवे व्यसने चैव निर्धनेषु धनेषु वा।
समादृता समाना त्वं चायदेवि! नमोऽस्तु ते।।6।।

प्रणयो जायते चाये दुष्कराः सन्धिविग्रहाः।
सम्भवाः चायभोजेषु चायदेवि! नमोऽस्तु ते।।7।।

संयोगेषु यथा भार्या हेमन्ते सुखदा सदा।
शीतकोपहरे सद्यश्चायदेवि! नमोऽस्तु ते।।8।।

चायशाला महाधन्या राष्ट्रियैक्यविधायिनी।
भेदभावहरे नित्यं चायदेवि! नमोऽस्तु ते।।9।।

प्रातः सायंतने चाऽपि दिने रात्रौ क्षणे–क्षणे।
भजन्ते मानवाः सर्वे चायदेवि! नमोऽस्तु ते।।10।।

हर्षदा प्राणदा बूटी चेतनायौवनप्रदा।
यो नरो सेवते भक्त्या वृद्धत्वं न हि गच्छति।।11।।□

# मत्कुणस्तोत्रम्

नष्टे निद्रासुखे रात्रौ सपत्नीकः सुतैः सह।
भजामि मत्कुणं देवं शय्याविघ्नोपशान्तये।। 1।।

## अथ स्तोत्रम्

अव्याहतगतिर्यस्य सर्वलोकेषु गीयते।
तस्मै देवाधिदेवाय मत्कुणाय नमो नमः।। 2।।

योगिनश्च गृहस्थाश्च यस्यैते सर्वदा प्रियाः।
तस्मै लोहितवर्णाय मत्कुणाय नमो नमः।। 3।।

गुप्तानि यस्य दुर्गाणि गोप्या वै रणयोजना।
तस्मै दस्युस्वरूपाय मत्कुणाय नमो नमः।। 4।।

हतोऽपि जायते शीघ्रं क्वचिन्नाशो न जायते।
तस्मै शोणितबीजाय मत्कुणाय नमो नमः।। 5।।

परिवारं सुविस्तार्य व्यर्थीकृतं नियोजनम्।
तस्मै रावणरूपाय मत्कुणाय नमो नमः।। 6।।

शोषणं चोषणं मन्त्रं जीवेत्कोऽपि म्रियेन्नु वा।
पुंजीपतिस्वरूपाय मत्कुणाय नमो नमः।। 7।।

यो मशकस्य पितृव्यो वृश्चिकस्य च मातुलः।
तस्मै खलाधिराजाय मत्कुणाय नमो नमः।। 8।।

भोज्यलाभे भृशं भुङ्क्ते जीवत्यनशनेऽपि यः।
तस्मै योगाधिराजाय मत्कुणाय नमो नमः।। 9।।

अन्तर्दाहं भृशं दत्ते पररक्तं प्रशोष्य यः।
तस्मै यौतुकदैत्याय मत्कुणाय नमो नमः।। 10।।

शय्यारसं प्रचोष्यासौ चौर्यभावैः पलायते।
तस्मै जारस्वरूपाय मत्कुणाय नमो नमः।। 11।।

गतौ विष्णुमहेशौ यद् भीतौ सागरशैलयोः।
तस्मै त्रैलोक्यजेतारं मत्कुणाय नमो नमः।। 12।।

यस्य मनोहरस्तुण्डो 'इन्जेक्शन'मिव शोभते।
तस्मै भेषजविज्ञाय मत्कुणाय नमो नमः।। 13।।

शय्यापादानि चत्वारि चातुर्धामीकरोति यः।
तस्मै तापसश्रेष्ठाय मत्कुणाय नमो नमः।। 14।।

शय्यागृहाणि सर्वेषां यस्याधीनं समन्ततः।
तस्मै व्यापकरूपाय मत्कुणाय नमो नमः।। 15।।

मत्कुणस्तोत्रमेतद् वै सततं शय्यासन्निधौ।
ये पठन्ति नराः प्रीत्या तेषां निद्रा प्रसीदति।। 16।।

## सत्यं शिवं सुन्दरम्

सत्यं हि तद् यत्पुलिसो ब्रवीति
नेत्रा यदुक्तं निखिलं शिवं तत्।
तत् सुन्दरं खल्वभिनन्दनीयं
यत्सर्वकारस्य जनाश्चरन्ति।। □

## नियुक्तिः

प्रत्यूषकाले रविवासरे तु
प्रीत्या स्वभर्तारमुवाच भार्या।
साप्ताहिको ह्यद्य ममावकाश–
स्त्वं वै नियुक्तो गृहिणीपदेषु।।

## यौतुककौतुकम्

सुन्दरं गुणसम्पन्नं वरं प्राप्य प्रयत्नतः।
लक्षैका यौतुकेच्छाऽपि स्वीचकार प्रहर्षितः।।
विवाहे सति सम्पन्ने यौतुके श्वसुरस्तदा।
'बम्पर ड्रा' सुसंयुक्तं 'लाटरी–टिकटं' ददौ।।

## चायपानम्

लाभं करोति हानिं वा चायपेयं जनप्रियम्।
अध्यापकेन संपृष्टः छात्रः सत्वरमब्रवीत्–
'परकोषात् यदा पानं चायं लाभकरं तदा।
निजकोषात् यदा पानं चायं हानिकरं तदा'।।

## काव्यपाठः

काव्यं सुश्रावयन्मञ्चे ददर्श सहसा कविः।
क्रोधितो विचरत्येकः श्रोता लगुडधारकः।।
तं विलोक्य कविः शीघ्रं काव्यपाठं समाप्तवान्।
स उवाच कविं प्रीत्या–''मा बिभेहि कवीश्वर!
श्रावयतु निर्भयः काव्यं सम्मान्यस्त्वतिथिर्भवान्।
समाहूतोऽसि येन त्वं शठमन्वेषयामि तम्।।'' □

# हरितसिन्दूरम्

''धार्यते परिणीताभिः सिन्दूरं रक्तवर्णकम्
परन्तु सखि! सीमन्ते धारितं हरितं त्वया!
ब्रूहि मे सर्वरहस्यम्।।''
सा प्रत्याह—''पतिर्मेऽस्ति वाष्पयानस्य चालकः
रक्तवर्णं विलोक्यासौ नैवायाति ममान्तिकम्।
भवति हरितेन चुम्बकः।।''

# श्रेयस्करं दानम्

पक्वान्नं प्रचुरं दत्तं मह्यं ते प्रतिवेशिना।
त्वमपि देहि मे खाद्यं भिक्षुकेन प्रयाचितम्।।
गृहस्वामी विहस्याह—''ह्यजीर्णं ते भविष्यति।
'पचनौलवटी'युग्मं श्रेयस्करं ददामि ते।।''

# बधिरो ब्रूते

बधिरो बधिरं ब्रूते—''बन्धो! तुभ्यं नमो नमः।''
दत्तं प्रत्युत्तरं तेन—''हस्ते मे सन्ति भण्टकाः।।
''अपि ते सुखिनः पुत्राः?''—पुनः सः परिपृच्छति।
''निर्माय 'भुरता' तेषां, भोक्ष्यामि सह बान्धवैः।।''

बधिरो बधिरं ब्रूते—''किं त्वं गच्छसि हट्टकम् ?''
''नहि नही''—ति प्रत्युक्तं—''अहं गच्छामि हट्टकम्।।''
किञ्चिद् विस्मितो भूत्वा विहस्य प्रथमोऽब्रवीत्।
''अहो! भ्रान्तिस्तु मे जाता यत्त्वं गच्छसि हट्टकम्।।''□

# आरक्षिगृहे चौर्यम्

आरक्षिकर्मिणः भार्या पतिं सुप्तं विलोक्य वै।
यत्नतः पतिकोषात्तु मुद्राशतमचोरयत्।।
गृहीत्वा तत्क्षणे चैनां क्रोधितः पतिरब्रवीत्।
"भद्रे! पुलिसवीरं मां पतिरेवावगच्छसि ?
निद्रितोऽपि विजानामि चौर्यं चौरं गतं धनम्।
पुलिसस्य गृहे चौर्यं साहसं तव कीदृशम् ?
अपराधं कृते हन्त कारागारं गमिष्यसि।"
निशम्य गर्जनं पत्युः सादरं कथितं तया—
"विधिपालक! वृत्तान्तमत्रैव परिशाम्यतु"
मन्दं विहस्य सा सद्यः रूप्यकं दशकं ददौ।।

# मंगलकामना

कन्यका स्वविवाहस्य प्रीत्याऽमंत्रणपत्रकम्।
प्रेषयामास सोत्साहैः पूर्वकालिकप्रेमिणम्।।
प्रतिपत्रे कृता तेन चेत्थं मंगलकामना—
'शुभदिनं लभस्वैतद् जीवने तु पुनःपुनः।।'

# कुतो गताः

सहस्राणां त्वमेकाऽसि सुमनोज्ञा वरानने !
रूपस्यैव प्रभावस्तत् परिणीताऽसि यन्मया।
नवोढया विहस्योक्तं—"त्वमेतद्वद सत्वरं
नवनवतिसंयुक्ताः नवशताः कुतो गताः।।" □

## रचनायोग्यता

'कस्याः काव्यस्य धारायाः योग्येयं रचना मम?'
सम्पृष्टे कविना प्रीत्या सम्पादको जगाद तम्–
''कृतो भूरिश्रमः पूर्वं याहि किंचित् पुनः कुरु।
गंगाधारोपयुक्तेयं गंगायै तु समर्पय।।''

## भेषजम्

'उदरे विकटो दाहः प्राणान्कर्षितुमिच्छति।'
रुग्णो वैद्यं वदत्येवं–'त्वरितं देहि भेषजम्।।'
वैद्यो जगाद–'दाहश्चेद् मे किं तत्र प्रयोजनम्।
त्वमग्निशामकं यानं गेहं गत्वा समाह्वय।।'

## काव्यानन्दः

कविं वै मरणासन्नं प्रत्यूचुः प्रतिवेशिनः।
''कण्ठतस्तव सम्प्राप्तः काव्यानन्दः क्व लप्स्यते?
वारमेकं पुनस्ताञ्च रसधारां प्रवर्तय।''
श्रुत्वा वचांसि सोत्साहैः काव्यपाठं चकार सः।।
शुश्रुवुः विस्मिताश्चैनं श्रोतारो धैर्यशालिनः।
लेभे स्वास्थ्यं कविस्तत्र जग्मुस्ते यममन्दिरम्।।

## उत्कोचदण्डम्

उच्चाधिकारिणं गत्वा परिवादो मया कृतः।
उत्कोचं स्वल्पकार्याय लिपिकस्ते प्रयाचते।।
मां समाश्वास्य तेनोक्तं–'निन्दनीयं महत्कृतम्।
कार्यान्निलम्बनं कृत्वा दण्डं दास्यामि तत्कृते।।
परन्तु दुष्करं कार्यं कर्मचारिनिलम्बनम्।
रूप्यकशतकं सद्यस्तत्कार्याय प्रदेहि मे।।'□

# भोजनमूल्यम्

"क्रियतां भोजनं श्रीमन्! मूल्यं दास्यन्ति पौत्रकाः"
विज्ञापनमिदं दृष्ट्वा गतोऽहं भोजनालयम्।
उत्साहैश्च भृशं भुक्त्वा यदाहं गमनोद्यतः
सुदीर्घं मूल्यसयुक्तं देयकं समुपस्थितम्।
विलोक्य विस्मितं मां तु सेवकेन निवेदितम्—
"पितामहेन यद्भुक्तं तद् वै मूल्यं प्रदीयताम्।।"

# विद्यालयं न यास्यामि

जगाद मातरं बालः साग्रहं विनयान्वितम्—
"विद्यालयं न यास्यामि शृणु मातः कदाचन।"
त्वयैव कथितं पूर्वं—"परस्थाने गृहेऽपि वा
वारं वारं क्वचिद् याते मानं तत्र न लभ्यते।।"

# क्वचिन्मर

व्ययभारैः समाक्रान्तो निराशः कोऽपि निर्धनः।
आत्मघाताय सन्नद्धः रेलमार्गे प्रलुण्ठितः।।
तस्य भार्या समागत्य सहसा दूरमक्षिपत्।
जगाद क्रोधिता चैनं—"मरणे काऽस्ति शीघ्रता?
ऋणदातॄन्महामूर्खान्हत्वा धान्यं धनं हर।
विलुण्ठ्य धनिकान्सर्वान्स्वर्णराशिं प्रयच्छतु।।
दाहकर्मकृते स्वस्य काष्ठं वस्त्रं समानय।
वारयिष्यामि नाहं त्वां तदा गत्वा क्वचिन्मर।।"□

# चिकित्साशुल्कः

विस्मृतिरोगसंग्रस्तो वदत्येवं चिकित्सकं–
'देयं शुल्कं प्रदास्यामि देहि मह्यं सुभेषजम्।'
तेनोक्त–''मुपचारं ते करिष्यामि न संशयः
चिकित्सादेयकं किन्तु पूर्वमेव प्रदीयताम्।।''

# गोपालकः

''गोपालकगवोर्मध्ये को भेदो वद सत्वरम्?''
अध्यापकेन संपृष्टः छात्रः कोऽपि तमब्रवीत्––
''निर्जलं या पयो दत्ते सा वै 'गौ'रितिकथ्यते
सजलं यः पयो दत्ते गोपालकः स उच्यते।।''

# कापुरुषत्वम्

सुरक्षाकर्मिणं ब्रूते बालः कोऽपि चतुष्पथे–
''वीरतारहितः श्रीमन्!कायरोऽसि न संशयः।''
''कथमेतत्त्वया ज्ञातं कायरोऽस्मि प्रियंवद!''
बालकः प्रश्नकर्तारं प्रत्यवोचच्च सत्वरम्–
''गृहाद् बहिः समायाते धार्यते सर्वदा त्वया
भुशुण्डिका शिरस्त्राणं दण्डं भल्लं पदे पदे।।''

# प्रीतिकरं भोजनम्

सहभोजं प्रकुर्वन्तं कस्मिञ्चिद् भोजनालये
मित्रमेकस्तु सस्नेहं द्वितीयं प्रति चाब्रवीत्–
''सेवकैर्यत् समानीतं तद् भोजनं न रोचते
मातृरूपेण भो मित्र! मह्यं भोज्यं प्रदीयताम्।''
भोजनान्ते द्वितीयोऽपि निजमित्रं जगाद सः
''पितृरूपेण भो मित्र! देयं मूल्यं प्रदीयताम्।।'' □

## पंगुभिक्षुः

विलोक्य भिक्षुकं पंगुं सत्पुरुषः जगाद तं–
''जीवनं पादहीनं ते नूनं दुःखमयं महत्।।
अन्धस्यापि भवेन्नैवं कष्टपूर्णं हि जीवनम्।''
श्रुत्वा वचांसि भिक्षुश्च मन्दं मन्दं तमब्रवीत्–
''यदासं नेत्रहीनोऽहं तदापि बहुदुःखितः।
पणानि दोषयुक्तानि दीयन्ते स्म तदा जनैः।।''

## कृपणस्य स्वर्गयात्रा

जीवलोकसुखं प्राप्य कृपणस्तु दिवं गतः।
स्वर्गद्वारे विलोक्येमं द्वारपालो जगाद तम्–
''कुतो यासि? कृतं पूर्वं पुण्यकार्यं निवेदय।''
विस्मितः कृपणः सद्यो द्वारपालं तदाऽब्रवीत्–
''वृद्धायै तु मया दत्तं ह्य एव रूप्यकद्वयम्।
सत्यं वदामि संसारे पुण्यमेतत्कृतं मया।।''
द्वारपालस्तदा तस्मै ददौ वै रूप्यकद्वयम्।
जगाद कृपणं चैवं–''नरकं गच्छतु श्रीमन्।।''

## स्वप्नकथाकष्टम्

प्रातरेव समागत्य स्वामिनं सेवकोऽब्रवीत्––
''स्वप्ने मह्यं त्वया दत्तं रूप्यकानि शतानि वै।''
तदा स्वामी विहस्याह–''सच्चरित्रोऽसि सेवक!
करिष्ये वेतने न्यूनं स्वप्नदत्तं हि तद्धनम्।''
स्वामिनो वचनं श्रुत्वा सेवकः पुनरब्रवीत्–
''स्वप्नमागत्य गृह्णातु स्वप्नदत्त हि तद्धनम्।।''□

## का दरिद्रता

प्रेमिणं प्रेमिका ब्रूते–"किं ते सत्यमिदं वचः?
चेदहं न वरिष्यामि स्वात्मघातं करिष्यसि।"
प्रेमी जगाद सस्नेहं–"मरिष्यामि न संशयः
एतत्तु मे स्वभावोऽस्ति मरणे का दरिद्रता?"

## प्रवचनम्

आरक्षिसेवकः कोऽपि मध्यरात्रौ चतुष्पथे
पीत्वा परिभ्रमन्तं वै जग्राह मदमत्तकम्।
'कुतो यासी'ति सम्पृष्टे मत्तः प्रत्युत्तरं ददौ–
"श्रोतुं प्रवचनं यामि मार्गं मुञ्चतु सत्वरम्
द्वादशवादने याते प्रविशामि यदा गृहे
धर्माचार्येव मे पत्नी सद्ज्ञानं बहु भाषते।।"

## कक्षायां भ्रमणम्

"भ्रमन्ति निजकक्षायां ग्रहाः सर्वे समन्ततः"
वदन्तमेवमाचार्यं शिष्यः कोऽपि समब्रवीत्–
"चेदेते निजकक्षायां सर्वकालं भ्रमन्ति वै
कस्मिन्काले पठन्त्येते कक्षायां विषयान्तदा?"

## प्रश्नपत्रम्

'पञ्चप्रश्नास्तु कर्तव्याः समानांकाश्च तत्कृते'
प्रश्नपत्रे विलोक्येतद् परीक्षार्थी तदाऽलिखत्–
'पञ्चोत्तराणि दृश्यानि पुस्तिकायां महोदय!
सर्वेषामेव प्रश्नानां समानान्युत्तराणि वै।।' □

## विद्यार्थी

'बसट्रेनेषु' 'फिल्मेषु' त्यक्त्वा स्वाध्ययनन्तु यो
विनैव 'टिकटं' याति 'विद्यार्थी' ति निगद्यते।
'नकलं' योग्यता यस्य 'चन्दा' चैव धनार्जनम्
'कट्टाधारी' मनुष्योऽयं 'विद्यार्थी'ति निगद्यते।।

## दन्तहीनो जीवः

सत्त्वानां दन्तहीनानां द्वे नाम्नी वद सत्वरम्
अध्यापकेन संपृष्टः छात्रः कोऽपि तमब्रवीत्–
'एतादृशो जनो ज्ञेयः प्रथमस्तु पितामहः
मदीये खलु संज्ञाने द्वितीयोऽस्ति पितामही'।

## प्रतिज्ञा

'करिष्ये विवाहं विना यौतुकेन'
प्रतिज्ञा कृता कन्यया साहसेन।
गते दीर्घकाले प्रतिज्ञानुसारं
वरं प्राप्य वृद्धं गता पूर्णकामम्।।

तथा वृद्धपत्युर्गृहे मासमेकं
निवासं कृतं वै तया सौख्यभावैः।
विलापाय वृद्धं छलेनापहाय–
धनं धान्यसर्वं गृहीत्वा जगाम।। □

# पुच्छलश्लोकाः

कार्यालयञ्च कार्यञ्च नैव जानामि पूर्णतः
जानामि केवलं मित्र! परिचर्याऽधिकारिणः।
जयतु नवनीतलेपनम्।।1।।

मन्त्रिपीठं सुसंबोध्य नेतोवाच पराजितः
मम चित्तस्य गंगायाः यमुनायाश्च ते हृदि।
संगमः कदा भविष्यति।।2।।

कर्ता विश्वस्य विश्वेशः योगैश्चापि न दृश्यते
सृष्टिं निर्माय विद्रूपां जनाक्रोशाद् बिभेत्यसौ।
अतः स्वमुखं न दर्शयति।।3।।

वर्षोत्सवः विवाहस्य संपत्स्यते कथं प्रिय!
संपृष्टे भार्यया प्रीत्या पतिः सादरमब्रवीत् ——
तद्दिने धारय मौनम्।।4।।

'मम हस्तौ दृढीकर्तुं मतं मह्यं प्रदीयताम्।'
वदन्तमिति नेतारं मतदाता च पृच्छति——
निर्बलौ किं ते हस्तौ।।5।।

सीमन्ताय तु कन्यायाः सिन्दूरं दीयते वरैः
सिन्दूरं कन्यका दद्यात् सीमन्ताय वरस्य चेत्।
किं करिष्यति खल्वाटः।।6।।

मांसपिण्डानि गात्रस्य कर्तनेऽपि मुहुर्मुहुः
मुञ्चत्यसौ'टरं' नैव पीडितोऽपि कदाचन।
कथ्यतेऽसौ तु 'मास्टरः'।।7।। □

# द्विपुच्छलश्लोकाः

उर्वरकापणं गत्वा खल्वाटेन निवेदितम्–
''श्रेष्ठमुर्वरकं देहि केशोत्पादनसक्षमम्।
कृपा ते चेद् भविष्यति
प्रिया मे मां वरिष्यति।।''1।।

कालिदासत्वमाप्नोति गौरवं तुलसीसमम्
भार्यया ताडितो लोके सम्मानं लभते भृशम्।
प्राप्य पत्नीप्रताडनम्
प्रसिद्धिं यातु सत्वरम्।।2।।

# हस्तदानम्

''बाले प्रदेहि मे हस्तं''– युवकेन प्रयाचितम्
युवत्या कथितं चैनं–''हस्तं मे किं करिष्यसि?
पूर्वमेव तु द्वौ हस्तौ दत्तं तुभ्यं विरंचिना
संभूय त्रिभुजः श्रीमन्! विद्रूपतामवाप्स्यसि।''
दिनान्तरे पुनस्तेन स्मित्वा हस्तं प्रयाचितम्
ज्वालामुखीव सामर्षं सद्यश्चैनं जगाद सा–
''हस्तमेतादृशं शीघ्रं प्रदास्यामि तवानने
दन्तहीनेन तुण्डेन मातामहीं स्मरिष्यसि।।''

# छात्रवृत्तिः

बाला विद्यालयं यान्ति,पठितुं नैव साम्प्रतम्
मध्याह्नभोजनं कर्तुं , मत्वैतद् भोजनालयम्।
हस्ताक्षरेऽसमर्थाय , विद्यार्थिने तु शिक्षकः
अंगुष्ठचिह्नमादाय, छात्रवृत्तिधनं ददौ।।□

# सूक्ति-सौन्दर्यम्

येषां न कुर्सी न पदं न कारम्
बैंकेषु क्षिप्तं प्रचुरं धनं वा।
ते राजमार्गेषु विनैव बीमां--
मनुष्यरूपेण मृगाश्चरन्ति।।1।।

विवाहशब्देन भवन्ति मत्ताः
कूर्दन्ति नृत्यन्ति मुदाश्चरन्ति।
प्रायः समापन्नविपत्तिकाले -
धियोऽपि पुंसां मलिनीभवन्ति।।2।।

सगर्जनं सन्निकटं समागतं
विडालकं वीक्ष्य जगाद मूषकः।
"त्वया समं मे कलहो न रोचते
महान्महत्स्वेव करोति विक्रमम्"।।3।।

पाखण्डिनं दुर्व्यसनेषु सक्तम्
प्रवंचकं द्यूतकरं च नित्यम्।
तं 'लाटरी'णां 'टिकट'प्रियं वै
लक्ष्मीः स्वयं याति निवासहेतोः।।4।।

चौरं प्रबोध्य परिजल्पति न्यायमूर्ति-
श्चौर्यं विहाय कुरु पौरुषमात्मशक्त्या।
चौरो निवेदयति बद्धकरस्तु क्षिप्रम्-
अंगीकृतं सुकृतिनः परिपालयन्ति।।5।।

सदा मनोहारि वचांसि भाषते
सर्वं समाश्वास्य हिताय गच्छति।
क्षणेन नेता सुलभं करोत्यसौ–
हितं मनोहारि च दुर्लभं वचः।।6।।

उत्कोचद्रव्यं सहजेन दत्त्वा
महाजनो सिद्ध्यति सर्वकार्यान्।
स्वकार्यसिद्ध्यर्थमयं सुमार्गः
महाजनो येन गतः स पन्थाः।।7।।

कन्यागुणैस्ते तुतुषुर्न मान्याः
कुलं न शीलं ददृशुर्न रूपम्।
लक्षैकलक्ष्यं समवाप्य तुष्टाः
न निश्चितार्थाद्विरमन्ति धीराः।।8।।

भवन्ति दुष्टाः पुरुषाः धनागमैः
यथाम्बुभिर्गर्जनसंयुताः घनाः।
अत्युद्धताः द्यूतविलासरक्तकाः
स्वभाव एवैष समृद्धिशालिनाम्।।9।।

श्रुत्वा वने मोहनवेणुनादं–
गोपांगनाः मुग्धमनाः व्रजन्ति।
विहाय लज्जां च कुलं च शीलं
छिद्रेष्वनर्थाः बहुलीभवन्ति।।10।।

आसन्दिका वैतसनिर्मिता वै
स्थातुं मया मित्रवराय दत्ता।
विहाय तां स त्वरितं बभाषे–
छिद्रेष्वनर्थाः बहुलीभवन्ति।।11।।

वृद्धस्य तरुणी भार्या बबाधे रज्जुना पतिम्
ताडयामास दण्डेन तथाप्येनां जगाद सः ।
''ताडयस्व यथाशक्तिस्तव पूजास्ति मे गतिः
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।।''12।।

रे नेतः! खलु सावधानमनसा मित्र! क्षणं श्रूयताम्
दातारो बहवो वसन्ति भुवि ते सर्वेऽपि नैतादृशाः।
केचिद् द्रव्यमतैः सुखं ददति वै गर्जन्ति केचिद् वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः।।13।

वसन्वै कान्तारे सकलसुखभोगान्प्रतनुते
समृद्धिं लोकेस्मिन्निखिलगुणहीनोऽपि लभते।
निराधारो दस्युः प्रबलदलशक्त्या विजयते
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे।।14।।

परीक्षाकक्षायां नकलरतमैनेजरसुतम्
गृहीत्वा सेवातः सपदि पदमुक्तिं खलु गतः।
ततोऽसौ मार्गेऽभूल्लगुडक्षुरिकाविक्षततनुः
विवेकभ्रष्टानां भवति विनिपातः शतमुखः।।15।☐

# हास्यकवेः परिचयः

पावकेषु धूमो वायुमध्ये बालुकाकणोऽस्मि
धूमकेतुसन्निभोऽस्मि नभसो विभूषणम्।
धर्माचार्यवृन्दकेषु भ्रष्टाचार्यरूपश्चास्मि
रावणसमाजे मामवेहि खरदूषणम्।।
पण्डितेषु मूर्खो मूर्खमण्डलीषु पण्डितोऽस्मि
भूषणापणेषु दुर्लभोऽस्मि पद्मभूषणम्।
अधिकारिमन्त्रिनेतृवीथिकासु चमसोऽस्मि
गंगायां प्रदूषणं सभासु चैव दूषणम्।।

मम काव्यधारायां निमज्जनेन शीघ्रमेव
मृत्युलोकतस्तु मुक्तिमेव परिलभ्यते।
रोगिणो हसन्ति स्वस्थमानवा म्रियन्ते चैव
पण्डितेष्वपण्डितेष्वभेदो परिलक्ष्यते।।
चेतनेष्वचेतनामचेतनेषु चेतनां च
प्रभवति कण्ठेऽयं प्रभावो मम विद्यते।
जनसंख्यायास्तु सर्वसुलभो नियामकोऽस्मि
सर्वकारद्वारा मत्प्रयासो बहु वन्द्यते।।

# पुत्रौ ददौ

समाजसेवकः कश्चित् गत्वा श्रेष्ठिनमब्रवीत्—
"दीनालये मदीये तु बालका अष्टविंशतिः
तेषां प्रपालनार्थाय साहाय्यं प्रददातु मे।"
निशम्यैतद्वचः श्रेष्ठी सोत्साहं निजगाद तम्—
"स्यादियमद्यतः संख्या बालानां पूर्णविंशतिः"
एतदुक्त्वा स्वपुत्रौ द्वौ याचकाय तदा ददौ।।'□

# पण्डितगेहे शीतम्

हेमन्तान्ते शिशिरागमनम्
पण्डितगेहे विपदागमनम्
पण्डितचित्तं भीतम्।
भृशं बाधते शीतम्।।

ब्राह्ममुहूर्ते गतं बोधनं प्रत्यूषे च स्नानम्
जाते सूर्योदये न मुञ्चति तूलपूरितं शयनम्
कम्बलयुतः प्रकम्पितगात्रो दन्तैर्गायति गीतम्।
भृशं बाधते शीतम्।।

शिखामार्जनं सूत्रस्नानं जललेपनव्यापारम्
नैव स्नानं वारं–वारं कुरुते मन्त्रोच्चारम्
पाकगृहं गमनं प्ररोचते निर्गमनं विपरीतम्।
भृशं बाधते शीतम्।।

अरुचिर्जाता पूजापाठे महती रुचिस्तु हवने
'स्वाहा स्वाहा' सीत्कारो वा गुञ्जति पण्डितभवने
तन्त्रं मन्त्रं जपध्यानं वा विसर्जितं सुपवित्रम्।
भृशं बाधते शीतम्।।

'थर् थर् थरि'ति प्रकम्पितहस्तः सूपौदनभोजने प्रवृत्तः
कणो न प्रविशति मुखे विकीर्णो ग्रासो भूमौ पतति विभक्तः
शीतं जलं विहाय प्रवाञ्छति 'चायब्रेड'नवनीतम्।
भृशं बाधते शीतम्।।

हिमवातैस्त्वक्कर्णं शून्यं नहि शृणोति पर कथनम्
प्रायो हस्तंगतवस्तूनां हस्ताद्भूमौ पतनम्
धूम्रविवरसदृशं मुखविवरं वदनज्योतिर्पीतम्।
भृशं बाधते शीतम्।।

पण्डितचित्तं भीतम्। अहो! बाधते शीतम्।।
भृशं बाधते शीतम्।। □

# मूषक-वन्दना

आदिपूज्यगणपतेः सेवकोऽसि प्रणमामि
त्वं व्यथाविधायकोऽसि चैव चौरनायकः।
सर्वसुखहारकः करोष्यमंगलं सदैव
मूषकगणादिसेवितोऽसि दुःखदायकः।।
स्वेदरक्तदहनेन तपसा परिश्रमेण
क्षेत्रे पोषितायाः शस्यसम्पदाविनाशकः।
प्रजया समं प्रयाहि देवलोकमाखुराज!
विघ्नहरवाहनोऽसि किन्तु विघ्नकारकः।।1।।

स्वामी ते गजाननोऽस्ति यः कपित्थफलमत्ति,
सर्वकृषिकर्मफलमेव त्वया नीयते।
दीर्घनासिकावतः समर्थसेवकोऽसि तेन,
विधिनियमोऽपि निर्भयेन त्वया जीयते।।
स्वामिशक्तिजनशक्तिधान्यशक्तिमत्तश्चाऽसि,
तेन मम विनयेषु श्रवणो न दीयते।
सर्वकारद्वारा मम वंशवृद्धिरवरुद्धा,
किन्तु तव वंशो नित्यमेव बहु चीयते।।2।।

जनसंख्यावृद्धेः परिपाको दुःखदायकोऽस्ति,
सर्वथैव वंशवर्द्धनन्तु निष्प्रयोजनम्।
साम्प्रतं नियोजनस्य बहु साधनानि सन्ति,
ममाभ्यर्थनं विचार्य प्रकुरु नियोजनम्।।
तव स्वामिनो पिता तु विषपायी शंकरोऽस्ति,
त्वं जगद्धिताय स्वीकुरुस्व मे निवेदनम्।
सर्वप्रजासहितस्तु मामकं गृहं समेत्य,
भुङ्क्ष्व कृपापूर्वकं महाविषाक्तभोजनम्।।3।। □

# कृपणस्य यौतुकम्

मम ग्रामे कृपणमहाजनेन कौतुकेन
बालिकाविवाहे बहु यौतुकं प्रयच्छितम्।
चोलचीरपटवस्त्रपरिधानमलिनानि
जर्जराणि भूषणानि सर्वमेव चाद्भुतम्।।
छिद्ररन्ध्रसंयुतानि धातुपात्रमृण्मयानि
सर्वजीर्णवस्तुसंग्रहालयं समर्पितम्।
कन्यकां विहाय यत्प्रदत्तं तत्तु सर्वमेव
जीर्णशीर्णजर्जरं पुरातनं जरान्वितम्।।1।।

चलनेऽवरोधो नास्ति मार्गबाधाबाधिताऽपि
रुद्धे सति क्रुद्धितेव सर्वकार्यवञ्चिका।
'खट्ट पट्ट खट्ट पट्ट खटरे'ति गुञ्जनेन
शान्तिभंगकरणाय सफलास्ति कुञ्जिका।।
घण्टिकां विनैव पथि कुरुते महारवन्तु
शिथिलास्थिपञ्जरा स्वगत्या सदा वक्रिका।
दंन्तपंक्तिध्वंसिका च हस्तपादभञ्जिका च
दत्ता तेन यौतुके कुचक्रिका द्विचक्रिका।।2।।

दत्ता कालसूचिका सा पुराकालसूचिकाऽस्ति
यस्याः सूचिकाद्वयं सहैव तत्र विहरति।
म्रियमाणा धेनुरेका बहुवृद्धा दत्ता या तु
वाहयित्वा नीता नैव चालिताऽपि सा चलति।।
लघ्वी गर्दभीसमाऽतिदुर्बला तुरंगिका च
शय्यामत्कुणान्विता या निद्रासुखं वर्जयति।
'रेडियो'ऽभिधानकं प्रदत्तं यन्त्रमेकं तत्तु
भिन्नस्वरैर्रोदिति च वादने तु गर्जयति।।3।। □

# महादशाग्रस्तो महादेवः

सर्वहितकारिणी सुरापगा प्रदूषिता या
पापपुंजहारिणी ललाटे ते विराजते।
सर्वमन्नसम्पदां जलं प्रदूष्य निर्भयेन
ते महाविषं तु वायुमण्डलेषु राजते ।।
मिश्रणमहोदयस्य कृपया तु यत्र–तत्र
खाद्यपेयवस्तुनिचयेषु विषं विद्यते।
पीत्वा वारमेकं त्वया लब्धं महादेवपदं
मया वै निरन्तरं महाविषं निपीयते।।

पशूनां चिकित्साभवनेषु नन्दी नन्दितोऽस्ति
प्रपलाय चन्द्रमाश्च केतनेषु शोभते।
मित्रहितवादिनां च प्रियवादिनां तथैव
भुजवस्त्रमध्ये भुजगोऽपि ते निलीयते।।
भ्रष्टाचारपापाचारव्यभिचारकर्मरता––
भूमौ छद्मवेशे भूतमण्डली विराजते।
व्यर्थमेव जातं 'प्रलयंकरे'ति तव नाम
परमाणुशक्त्या वै महालयोऽपि भाव्यते।।

जटाजूटशोभा हिप्पीवृन्दकेषु प्रतिभाति
कामिनीकलापे ते विभूतिच्छटा दृश्यते।
ते समाधिपद्धतिस्तिरस्कृता सुदुर्लभाऽस्ति
भोगवादिनां प्रपंचसाधनासु लभ्यते।।
युगे ते प्रभावो सर्वसुलभोऽस्ति यत्र–तत्र
युगमारुतस्य कुप्रभावो त्वयि विद्यते।
वै समर्पितां सतीं विसृज्य दक्षपावकेषु
मूर्ध्नि गंगा प्रेमिका त्वया सदैव धार्यते।।

अद्यकशाघातैर्नर्तनं करोति गर्जनञ्च
'सर्कसे'षु देवीसिंहः पंजरस्थो विद्यते।
भालुकपिनर्तनेषु नटभिर्निनादिता ते
लोके यत्र–तत्र डमरुध्वनिश्च श्रूयते।।
त्रिपुरासुरः स्वयं त्रिशूलधारको विभाति
निर्भयेन तेन सच्चरित्रता प्रहन्यते।
भस्मबीजतामवाप्य कोटिरूपतां गतोऽस्ति
मन्मथस्य शासनं समन्ततः सुदृश्यते।।

युगे'भोले'इति नामशेषतां गतोऽसि चाद्य
'बम बम'इति नादो भूमितो दिवंगतः।
सर्वबमसम्पदोग्रवादिभिः प्रचोरितास्ति
शब्दोऽयं धरायामस्ति प्रलये समुद्यतः।।
नास्ति ते दिगम्बरत्वे किमपि विलक्षणन्तु
नव्यसभ्यतायां नग्नभावो लोकसम्मतः।
फैशनमहोत्सवेषु कामिनीषु यत्र–तत्र
संस्कृतिर्दिगम्बरा सुदृश्यते समन्ततः।।

गणपतिवाहनं फणीन्द्रो भोक्तुमीहते वै
तथा नागराजो मयूरस्य लक्ष्यमागतः।
वृषभं गजाननं मुहुर्मुहुः समवलोक्य
लुब्धो देवीसिंहो विहरत्यसावितस्ततः।।
अन्नपूर्णागेहे समापन्ने भोज्यसंकटे तु
सुखी परिवारोऽभवत्कुमतिसमन्वितः।
कलहोद्यतान्तु निजगृहवासिनो विलोक्य
विवशस्तु शंकरः समाधिशरणं गतः।। □

# नाममहिमा

हरिश्चन्द्रो मिथ्याभाषी लब्धस्वर्णपदकोऽस्ति
मिथ्यासाक्ष्यदानं यस्य व्यवसायो विद्यते।
लक्ष्मीनाथस्यूतौ लक्ष्मीहीनतैव प्रतिभाति
गेहे गृहलक्ष्मीः सत्याग्रहं कर्तुमुद्यते।।
रणवीरसिंहः सर्वदैव भार्यायार्बिभेति
भीमदेवो दुर्बलोऽस्ति तेन स्वल्पमद्यते।।
लज्जारामो गुण्डानायकोस्ति लोकविश्रुतश्च
सन्तरामो नामधारी दस्युराजो विद्यते।।

दूल्हारामो नाम किन्तु वंचितो विवाहतोऽपि
कुलदीपकास्तु कदाचारैः कुलं दूषयन्ति।
दयारामनामा चैको पुलिसनिरीक्षकोऽस्ति
यस्य क्रूरचरितानि सर्वविदितानि सन्ति।।
यो कुबेरनामा बालश्रमिकोऽस्ति निर्धनोऽस्ति
तस्य बान्धवाश्च दुःखमनुभूय निवसन्ति।
नाम भूपतिः परन्तु भूमिहीनकृषकोऽस्ति
विद्याभूषणा निरक्षराश्च भुवि विचरन्ति।।

फूलनेति नाम किन्तु दस्युकर्मकुशलास्ति
सावित्री विवाहच्छेदकरणे समुद्यता।
मीरा जनाराधनं करोति नृत्यशालायां
राधा शिशुपालगृहिणी पदे प्रतिष्ठिता।।
संज्ञया या मोहिनी सा पुलिसनिरीक्षिकास्ति
शारदा महाजनेषु स्यूतिकर्तने रता।
लक्ष्मीदेवी सा गृहेषु पात्रमार्जनं करोति
जनकदुलारी प्रेमिणा समं पलायिता।। □

# सदुपदेशः

सेवस्व यत्नैः स्वपतिं सदैव
सपर्यया तं कुरु चात्मपक्षे।
विधाय सामं ननु दण्डभेदौ
कृत्वा वशे तं हर दामराजम्।।1।।

ज्येष्ठस्य पत्नीं प्रति शाठ्यभाव–
स्तथा च श्वश्रूं प्रति शत्रुभावः।
यो द्वारपालः श्वसुरस्त्वदीय–
स्तस्मिन्भवेत्कृत्रिमनम्रभावः ।।2।।

वदान्यभावो गृहसेवकेषु
भवन्ति ते गुप्तचरास्तवैव।
यां गैसचुल्लीं प्रददामि तुभ्यं
सद्यश्च तां सार्थवती कुरुस्व।।3।।

ददामि तैलं बहु मृत्तिकायाः
गेहे च तुभ्यं सुलभः प्रदीपः।
ज्वलन्ति वध्वो बहु नित्यमेव
श्वश्रूं स्वकं ज्वालय तत्र गत्वा।।4।।

विहाय दैन्यं च भयं त्वदीयं
कुरुस्व प्रीत्या महिषीव राज्यम्।
पिस्तौलरूपः प्रददामि यस्ते
स रक्षको दास्यति सर्वकामान्।।5।।

एवं युवत्यः गृहिणीपदेषु
लब्ध्वा प्रतिष्ठां सुखिनो भवन्ति।
कलौयुगे याः सरलस्वभावाः
ताः यौतुकाग्नौ सततं पतन्ति।।6।। □

# आनय दूरदर्शनम्

कृत्वा चणकानां विक्रयम्।
गोधूमानां चैव विक्रयम्।
आनय मह्यं दूरदर्शनम्।।
लब्धं मामकपितुर्गेहतो, गतदिवसैकं पत्रम्।
आयास्यति पत्या सह भगिनी,मम भ्राता सकलत्रम्।।
आनय मह्यं दूरदर्शनम्।।
नैव पाचयिष्यामि भोजनं ,वदिष्यामि नहि वचनम्।
भविष्यामि मण्डनरहिताऽहं, कृत्वा नित्यमनशनम्।।
आनय मह्यं दूरदर्शनम्।।
सप्ताहान्ते त्वयि विलोकयति, पितुर्गृहं मे गमनम्।
दूरदर्शनं नयतु भविष्यति, न तु मे दूरदर्शनम्।।
आनय मह्यं दूरदर्शनम्।।
यस्मिन्दिवसे क्रीत्वा गेहे, मनोरथं मे नेष्यसि।
तद्दिवसे दाम्पत्यजीवने, सर्वं सुखं प्राप्स्यसि।।
आनय मह्यं दूरदर्शनम्।।

# क्रीकेट-कौतुकम्

क्रीकेटक्रीडनं लोके परिव्याप्तं गृहे–गृहे।
क्रीडत्याधुनिका नारी पत्या सार्धं तु सर्वदा।।1।।
साहसेन करोत्येषा क्रीडा बेलनबल्लया।
'नानस्ट्राइकरे' शीर्षे तन्माता सुविराजते।।2।।
प्रतिपक्षस्य नेत्री सा श्वश्रू 'विकेटकीपरा'।
स्वजनाः बान्धवास्तस्याः सर्वे क्षेत्रसुरक्षकाः।।3।।
एवं क्रीडाविधाने तु श्वसुरो वै निर्णायकः।
पक्षावुभौ विलोक्यासौ मौनमेवावधार्यते।।4।।
पत्याप्रक्षेपिते गत्या प्राप्ते प्रणयकन्दुके।
'चौका–छक्का'–प्रहारैस्तु मर्यादामपि लङ्घ्यते।।5।।
सोत्साहैर्धावनं कृत्वा गृहे सर्वत्र क्रीडति।
दर्शं दर्शं तु क्रीडेयं मोदन्ते प्रतिवेशिनः।।6।।□

# द्विजिह्वता

सर्पो विषं मुञ्चति मानवेषु
प्रयोजने नैव तु सर्वदैव।
दंशप्रहारं सततं करोति
व्यापारमध्ये तु जनो जनेषु।।1।।
श्रुतं न ज्ञातं जगतीतले वै
सर्पेण सर्पो दंशितः कदापि।
प्रीत्या समाजे कुरुते नरोऽसौ
सर्वत्र दानं विषमोदकानाम्।।2।।
जिह्वाऽस्ति चैका मृदुभाषणाय
तथा द्वितीया परदूषणाय।
मात्सर्यरागोपहिते हि लोके
द्विजिह्वता सुष्ठु नरेषु जाता।।3।।

# न रोचते

नटस्तु वै जरातुरः। पुरातनन्तु क्रीडनम्।।
प्रदर्शनं मुहुर्मुहुः। सखे! न मेऽद्य रोचते।।1।।
नदीषु बालुकाजले। नयन्ति कर्गजस्य नौः।।
मरीचिकासु जीवनं। सखे! न मेऽद्य रोचते।।2।।
प्रपाल्य चन्द्रचूडतां। प्रवञ्चयन्ति गौतमम्।।
दिनेऽपि छद्मकौतुकम्। सखे! न मेऽद्य रोचते।।3।।
क्षुधातुरन्तु निर्बलं। दिशाविहीनशैशवम्।।
पिपासिताः घनाः स्वयं। सखे! न मेऽद्य रोचते।।4।।
स्वकर्मभ्रष्टयौवनं। प्रकाम्यतेऽति यौतुकम्।।
धनाय यौनवञ्चनं। सखे! न मेऽद्य रोचते।।5।।
हिमालयस्य वर्धनं। क्षयं प्रयाति निर्धनः।।
निरन्तरन्तु शोषणं। सखे! न मेऽद्य रोचते।।6।।□

# कीदृशो वसन्तः

न लब्धं मदत्वं नवैर्मञ्जरीभि–
स्तथा वञ्चितो गुञ्जनैर्षट्पदोऽपि।
सुगन्धैर्विहीनः समीरो प्रवाति
कथं गायनं रोचते कोकिलेभ्यः।।1।।
सुधा वै गता भूमितः स्वर्गलोके
व्यथाग्नौ तु दूर्वा प्रदग्धा विभाति।
विशीर्णाधरं रंगहीनं प्रसूनं
कथं गायनं रोचते कोकिलेभ्यः।।2।।
प्रदाहं न यावद्धि ग्रीष्मस्य शान्तम्
न तारापथाद्दुर्दिनं चैव यातम्।।
वृथा जल्पना लक्ष्यते वै वसन्तः
कथं गायनं रोचते कोकिलेभ्यः।।3।।

# गर्दभराजस्य होरी

होरीं खेलति गर्दभराजः।।
गर्दभसंघाध्यक्षः विहरति यथा कोऽपि मृगराजः।।
विविधरंगभारैराक्रान्तो ननु शोभतेऽभिरामः।
निजस्वामिनं निपात्य साहसी समागतो बलराजः।।
रंगरंजितायां धरायां लुण्ठति विगतविषादः।
रंगस्नातं रुचिरं वदनं भाति यथा रसराजः।।
गर्दभयुवतिसमूहं वितरति पदप्रहारप्रसादम्।
रंगाक्रान्तो वीथिषु विहरति मदमत्तो गजराजः।।
पञ्चमस्वरपूरितसहगानैर्दिशि दिशि दिशति सुरागः।
फागधमारगायनैर्नन्दति हृष्टः सकलसमाजः।।
होरीं खेलति गर्दभराजः।।□

# होली-मिलनम्

दुःखदायकं होलीमिलनम्।।
यथाशीघ्रं वारयन्तु रीतेः सर्वत्र प्रचलनम्।।
रंगस्नातः कर्दमलिप्तः कृष्णमुखः सुविचित्रः।
समालिंग्य प्रकरोति सत्वरं गात्रं वसनं मलिनम्।।
बलसम्पन्नस्थूलशरीरः परिष्वज्य व्याकुलयति।
चूर्णीकृत्यास्थीनि दर्शयति मिलनव्याजैः स्वबलम्।।
मिलने मदगन्धं प्रसार्य ननु नश्यति वातावरणम्।
वदनसकासं वदनं कृत्वा वै रुणद्धि मे श्वसनम्।।
विजयोन्मत्तः घूर्णितचित्तः मिष्ठान्नं बहु भुङ्कते।
प्रहरं यावद् नानागल्पैः कुरुते बहु संलपनम्।।
वारं वारं समालिंग्य निजहस्तकौतुकं तनुते।
निभृतः स्यूतिकर्तनं कृत्वा कुरुते सद्यो गमनम्।।
दुःखदायकं होलीमिलनम्।।

# आह्वानम्

माधव! ब्रजवीथिष्वागच्छतु।
गावो निष्क्रान्ताः महिषी यूथानि सर्वतः पश्यतु।।
नैव भोजनं किन्तु लेपनं नवनीतस्य प्रचलितम्।
'सपरेटा'याः चायं पीत्वा क्रीकेटक्रीडां क्रीडतु।।
तव लीलानाट्यं विलोक्य वै परिहसन्ति ब्रजबालाः।
'डिस्कोट्विस्ट'नर्तनं प्रचलति ताभिः सार्धं नृत्यतु।।
कृत्वा स्वयं चीरहरणं विहरन्ति ब्रजे ब्रजप्रमदाः।
'हीरो' रूपं धृत्वा वीथिष्वेताभिः सह विहरतु।।
कृष्णधने कृष्णव्यवसाये भवतो नामोच्चारः।
निजलोकप्रियतां महिमानं दर्शं दर्शं हर्षतु।।
माधव! ब्रजवीथिष्वागच्छतु। □

# मतदातृवन्दनम्

प्रभो! मतदातः!! करबद्धः शिरसा नमामि
कृपया प्रसीद; प्रददातु मे भवन्मतम्।
द्वारि ते समागतो मतानां योग्ययाचकोऽस्मि
भूयः प्रणतोऽस्मि पाहि दीयतां मनोगतम्।।
हरितं 'रिज़र्व बैंक'—पत्रकं समर्पयामि
लप्स्यसे प्रपानकं सुस्वादुभोगसंयुतम्।
मनसा चैव वाचाहं भवत्सुसेवको भवामि
मतं मतं दत्त्वा देहि मह्यं पूर्णबहुमतम्।।

कामये न धनद्रव्यवाहनादिसाधनानि
भवतां मतानि कामये तथा समर्थनम्।
नेतृगणाः सर्वे वै भवद्भिर्दृष्टाः पूर्वमेव
वारमेकं सेवकस्य पूरय मनोगतम्।।
याते पंचवर्षे वारमेकं याचनं करोमि
मत्कुलीनतामवेक्ष्य स्वीकुरु निवेदनम्।
मन्त्रिपदं शीघ्रमेव सर्वकारे समवाप्य
सुलभं करिष्ये भूमौ स्वर्गसुखं शोभनम्।।

प्रजातन्त्रे सर्वमान्यदेवरूपे पूजितोऽसि
कृपया तवैव सुमहत्पदोऽपि लभ्यते।
मम विरोधिनस्तु क्षेत्रेऽनेके सक्रियाः सन्ति
भक्तानां त्वया परन्तु मंगलं विधीयते।।
विजयोपहारं प्राप्य स्वीकरिष्ये दस्युकर्म
मुक्तहस्तलुण्ठनं वरं भवेच्च तत्कृते।
भविष्याम्यदृश्यो पंचवर्षहेतवे विजित्य
किंचिदपि न कष्टं क्षेत्रवासिजनो लप्स्यते।। □

## लम्बोदरस्य भोजनम्

मम लम्बोदर! त्वं खलु महान्।।
गतवान् पदातिर्भोजेऽहं, सर्वैः सार्धं योजनत्रयम्।
भोजनशालायामाहूते सत्वरं कृतं अशनारम्भः।।
शष्कुल्यस्त्रिंशति भुङ्कते मयि परिव्याप्तं वै महदाश्चर्यम्।
अथ प्राप्ते दुग्धशर्करामपि द्वे घटिके यावत्कृतमशनम्।।
भोजनदातारः पराजिताः मम लम्बोदर! त्वं खलु महान्।।
उदरोपरि हस्तं प्रचालयन्निजगृहं कृतं प्रत्यागमनम्।
पथिपूर्णजलां कुल्यामेकां कूर्दयन् सखायश्चापि गताः।।
जाग्रते वीरता तत्काले सहसा कूर्दनं मयाऽपि कृतम्।
कुल्यामध्ये तत्क्षणेऽपतत् 'ढोलं' सदृशोऽयं महोदरः।।
भुङ्कतेऽपि भृशं कृतमपघातं मम लम्बोदर!त्वं खलु महान्।।
मम लम्बोदर! त्वं खलु महान्।।

## उत्कोच-सलिला

उत्कोचनद्यः सततं वहन्ति
प्रत्यक्षरूपैश्च परोक्षरूपै--
र्भिन्नप्रकारैर्मनुजाः पिबन्ति
नेत्रैर्मुखैश्चापि करद्वयेण।।1।।

कार्यालये वा पथि वा गृहे वा
रात्रौ दिने वा सुखदं प्रपानम्।
उत्कोचदण्डं भुवने प्रसिद्ध--
मुत्कोचमेवास्ति न तत्र चिन्ता।।2।।

जनाकुले शून्यजने वने वा
स्तोकाधिकं साहसिकाः पिबन्ति।
ये सज्जनाः मानवधर्मयुक्ताः
पातुं सदा बिभ्यति बुन्दमेकम्।।3।। □□□

# द्वितीयो भागः

# काव्यविविधा



## वन्दना

अभिनववनमालामण्डितं यस्य वक्षो–
मणिजटितकिरीटं सुन्दरं भाति मौलौ।
धृतसरसिजपाणिः शंखचक्रादिचारुः
स वसतु मृदुमूर्तिर्माधवो मानसे मे ।।

लसति वपुषि रम्यं यस्य पीताम्बरं वै
श्रुतिमधुरनिनादो जायते यस्य वेणोः।
विहरति ब्रजवीथ्यां यो हि गोपांगनाभिः
विरमतु मम चित्ते नन्दजो बालकृष्णः।।

## संस्कृत–स्तवनम्

संस्कृतेर्रक्षणं कृत्वा भारतीयत्वं प्रकाशते
ज्ञानदां वन्दनीयां तां देववाणीं नमाम्यहम्।
उत्तरे दक्षिणे पूर्वे पश्चिमे च समादृतां–
राष्ट्रैकतानिधानां तां देववाणीं नमाम्यहम्।
कर्माकर्मपरिज्ञानं धर्माधर्म प्रकाशते
संस्करोति नरान्तस्मै संस्कृताय नमोनमः।। □

# कविता

चारुचन्द्रचन्द्रिकापरिवृता मनोज्ञतेव
सुधापात्रसंयुता प्रफुल्लतेव कविता।
पद्मगंधा शारदपयोधरेव पद्मवती
प्रेममयी पद्मिनी पवित्रतेव कविता।।
नवरसव्यंजनसमन्विता निरंजनेव
ज्ञानभारभूषिता विनम्रतेव कविता।
सत्त्ववती शीलवती कर्मधर्ममर्मवती
शिवता समग्रता मनुष्यतेव कविता।।1।।

ज्वालाजालसन्निभाकराली दाहशक्तियुता
साहससुतेव रक्तरंजितेव कविता ।
रागरंगवैभवनिमज्जिता मदप्रदेव
वासनाविभूषिता विलासितेव कविता।।
अर्थधर्मकाममोक्षनीतिशास्त्रसंयुतेव
विद्याकलाऽलंकृता समग्रतेव कविता ।
रजोमयी कीर्तिमयी लोकहितधर्ममयी
प्रेममयी समता स्वतंत्रतेव कविता ।।2।।

कदाचारकल्मषकुभावनाविदारिणीव
सदा सदाचारिणीव शुचितेव कविता।
सर्वतापदंभद्वेषछलछद्महारिणीव
गगनविहारिणी मनोज्ञतेव कविता।।
अघनाशकारिणी शिवेतरनिवारिणीव
मंजुमनोहारिणीव चारुतेव कविता।
बालरविसन्निभा नवप्रभाप्रसारिणीव
तमोव्यूहवारिणीव शुभ्रतेव कविता।।3।। □

# नौमि तं भारतम्

विश्ववन्द्यं मदीयं वरं भारतम् ।
सर्वदा भा–रतं नौमि तं भारतम्।।

संस्कृतिर्यत्र दिव्या जनाः सज्जनाः
कर्मवीराः सदाचारिणो योगिनः।
यस्य गीतानि गायन्ति देवा मुदा
वन्दनीयं परं नौमि तं भारतम्।।

जाह्नवीसिन्धुशिप्रास्तथा हंसजा
सर्वनद्यो हिमाद्रिर्वना निर्झराः।
मंगलानां प्रकुर्वन्ति संगायनम्–
यस्य क्रोडस्थले नौमि तं भारतम्।।

राष्ट्रवीरा अनेके प्रतापादयः
क्रान्तिवीराः सुभाषो हमीदः शिवा।
यत्र वीरांगनाः सन्ति लक्ष्मीसमाः
राष्ट्रभक्तिप्रदं नौमि तं भारतम्।।

आंग्लसिक्खास्तथा हिन्दवो मुस्लिमाः
भिन्नधर्मानुगाः भ्रातृभावैर्जनाः।
सन्निवासः प्रकुर्वन्ति यस्यांचले
मातृवद्वत्सलं नौमि तं भारतम्।।

यत्र घण्टाध्वनिर्मन्दिरे–मन्दिरे
मस्जिदेष्वप्यजानध्वनिः श्रूयते।
गान्धिनो रामराज्यस्य संकल्पना
यत्र सम्भाव्यते नौमि तं भारतम्।।

भिन्नभाषाः प्रदेशाश्च वेषास्तथा
दृश्यते भिन्नतायां विचित्रैकता।
जातिभेदान्वितं पुष्पमालासमं
पावनं संगमं नौमि तं भारतम्।।

प्राणिनां श्रेयसे सात्त्विकी कामना
शोभते माननीया शुभा भावना।
स्वार्थमुत्सृज्य लोकाः परार्थे रताः
भूतये तत्परं नौमि तं भारतम्।।

शान्तिमार्गेषु सर्वं जगन्नीयते
देशदेशेषु शुभ्रं यशो गीयते।
भाति भव्यं त्रिवर्णात्मकं केतनं
यस्य गर्वान्वितं नौमि तं भारतम्।।

## नववर्षाभिनन्दनम्

स्वर्णालोकभूषितो दिवाकरोऽद्य प्रतिभाति
विश्वशान्तिदूतसमः शान्तिदायको भवेत्।।

रंगवर्णजातिभेदभावनाविनाशकोऽस्तु
नवजागृतेर्दिशान्तरेषु नायको भवेत्।।

सन्ततंसमृद्धिसिद्धिबुद्धिवृद्धिदायकोऽस्तु
हृदि हृदि चैक्यभावनाप्रसारको भवेत्।।

सुखिनो भवन्तु सर्वलोकाः क्षेमिणो वसन्तु
विक्रमीयवर्षो नवहर्षदायको भवेत्।। □

# ग्राम-दर्शनम्

बालरविरश्मिभिः प्रशस्तप्रांगणेषु यस्य
नित्यमेव सम्भवत्यपारस्वर्णवर्षणम् ।
वृषभैस्तु प्रातरेव घण्टिकारवं वितत्य
क्षेत्रवृन्दकेषु जायते हलस्य कर्षणम्।।
द्विजकूजनैस्तथैव द्विजवरगायनैश्च–
मन्दिरेषु देवीचत्वरेषु मंगलार्चनम्।
दिव्यगुणभूषिता वसन्ति मानवा हि यत्र
सर्वथा शिवंकरं सुरम्यग्रामदर्शनम्।।1।।

यत्र निर्मलेषु भव्यभवनेषु मृण्मयेषु
शिशुकेलिक्रीडनैर्महत्सुखं प्रजायते।
पशुशावकैः समं भृशं विनोदतत्परैश्च
बालकैर्युतं तु वीथिकाकुलं सुदृश्यते।।
मल्लशालायां विभान्ति व्यस्तमल्लकास्तथैव
पाठशालाप्रांगणेषु व्यस्तताऽति वर्तते।
ग्रामवासिनां तपस्तु श्रमसाधना तथैव
लोकमंगलाय लोकरक्षणाय विद्यते।।2।।

आम्रकाननेषु श्रूयते मृदुः पिकध्वनिश्च
शिखिनस्तु काननेषु नर्तने रताः वसन्ति।
पुष्पवाटिकासु कमलाकरेषु गुंजनैश्च
षट्पदास्तु पुष्परेणुरंजिताः मुदाश्चरन्ति।।
हरिततृणान्वितेषु विस्तृतेषु शाद्वलेषु –
सर्वतोऽपि पीवराश्चतुष्पदाश्च विचरन्ति।
ललितलतावितानमण्डपेषु यत्र–तत्र
गोपबालकाः प्रसन्नमानसाश्च विहरन्ति।।3।।

ग्राम्यजीवनाय पूर्तिदेवतेव सत्कृताऽस्ति
लघ्वी योजनान्तरे स्थिताऽस्ति ग्रामहट्टिका।
'चर्र मर्र चर्र मर्र चर्र मर्र चूँ' स्वरेण–
पथि सुप्रयाति भारपूरिता शकट्टिका।।
कार्यक्षेत्रतो गृहं निवर्तते दिने गते तु
श्रमसाधकस्य खटखटायते द्विचक्रिका।
श्रान्तक्लान्तश्रमिकेण सदनं समागतेन–
लभ्यते कदाचिदेव लवणं च रोटिका।।4।।

सरलस्वभावाः कर्मवीराः ग्रामवासिनस्तु
विश्वबन्धुतायाः मानकं नरेषु प्रस्तुवन्ति।
धर्मजातिभेदभावनां विहाय सर्वदैव
लोकदुःखकातरा परं हितं विचिन्तयन्ति।।
श्रमदाननिर्मितासु रम्यग्राम्यवीथिकासु
जरठाश्च बालकाः महासुखेन विहरन्ति।
दुःखदानवं निगूह्य मानसे निजश्रमेण
श्रमिकास्तु जंगलेषु मंगलं समाचरन्ति।।5।।

आल्हागायनं क्वचिद्धमारफागगायनञ्च
भक्तिगीतगायकः क्वचित्प्रमोददायकोऽस्ति।
'खम्म खम्म खं खमे'ति वादयन्ति वादकाश्च
बिरहाविधायाः कोऽपि सुमधुरगायकोऽस्ति।।
मेलाप्रांगणेषु देवीपूजनेषु 'डम्म डम्म' –
डफवादकस्तु सर्वदुःखदैन्यहारकोऽस्ति।
एकताविधायको हि शान्तिसिद्धिदायकोऽस्ति
सुरलोकतोऽपि ग्रामलोको हर्षदायकोऽस्ति।।6।।

यथा यथा शिक्षायाः प्रसारो वर्धते तथैव
नव्यकृषियन्त्राणां प्रयोगः परिवर्धते।
तमसावृतासु ग्राम्यवीथिकासु यत्र–तत्र
विद्युद्दीपकैस्तु शोभना विभा वितन्यते।।
रथगजतुरगादिकेषु रुचिहीनताऽस्ति
स्वचलितवाहनप्रचारो बहु विद्यते ।
रंजनाय नाना साधनानि सुलभानि सन्ति
'रेडियो'ऽस्ति चैव दूरदर्शनं सुदृश्यते।।7।।

मृत्तिकाचयं सुवर्णरूपे परिवर्तते यो
धरापूजकाय कृषकाय ते नमो नमः।
पीडितोप्यभावैः सन्ततं समृद्धिदायकोऽस्ति
श्रमपूजकाय कृषकाय ते नमो नमः।।
दुःखितोऽपि यः सुखं ददाति लोकजीवनाय
कर्मसाधकाय कृषकाय ते नमो नमः।
यो बुभुक्षितोऽपि क्षुधायै ददाति भोजनन्तु
मानवोत्तमाय कृषकाय ते नमो नमः।।8।।

# वाल्मीकिं नमामि

लोकाय प्रददौ रामं, लोकेशं जगदीश्वरम्।
तस्मै महर्षिश्रेष्ठाय, भूयो भूयो नमाम्यहम्।।

रामो वसति सर्वत्र, कृत्वा मानस–मन्दिरम्।
मन्दिरं मस्ज़िदं चर्चं, भक्तानां परितोषये।। □

# शारद-शोभा

कुन्दघनसारचन्द्रचन्द्रिकांशुशुभ्रतेव
दुग्धगौरवसनविभूषिता विभावती।
नव्यफुल्लपंकजानि सर्वगात्रमञ्जुलानि
कञ्जपादकरा कञ्जलोचना वपुष्मती।।
दुर्दिनैः समं गतास्तमोघनाः दिशान्तरेषु
सत्त्वदीप्तिदीपिता शिवंकरेव शाश्वती।
विज्ञजनमानसमलापहाऽमृतत्वदा च
चारूपूर्णचन्द्रमुखी शारदसरस्वती।।1।।

कलितकलाधरकलाप्रभांशुभासनेन
ज्योतिरुत्तमं तमोविनाशकं प्रकाशते।
ललितलतान्वितेषु वाताक्षिप्तपादपेषु
नवरसरंजिता सुवर्णप्रभा राजते।।
विमलं जलं विभाति गगनं समुज्वलञ्च
पवनस्तथैव निर्मलं मनोऽपि जायते।
चंचरीकगुंजनैर्विहंगकलकूजनैश्च
सप्तनादपूरिता विपंचिका विराजते।।2।।

कमलाकरेषु नवा पद्ममाला शोभते नु
विषयाम्बुतो विरक्तमानसा विशालिका।
अज्ञतातमो जगत्प्रपंचकं पयोमुचञ्च
दैन्यदुःखदुर्दिनं हरत्यहो! करालिका।।
तारामंडलेव सचराचरं प्रकाशयन्ती
चेतनाप्रदात्री शस्यश्यामला प्रपालिका।
क्षीरनीरज्ञानाज्ञानशोधने रता सदैव
शैत्यशान्तिदायिनी प्रसन्ना हंसमालिका।।3।।

वेणुवने वायुरपि वेणुवादने रतोऽस्ति
शालिवने क्रौञ्चपक्षिभिस्स्वरः प्रदीयते।
चक्रवाकसारसनिनादैः कलहंसरवैः
कारण्डवरुतैर्मृदुगीतमनुगीयते ।।
काशवनं मारुतेन पक्षिभिश्च प्रेरितन्तु
मधुरस्वरैः सुवाद्यवादकं प्रतीयते।
शारदीयशारदासभासु वै महोत्सवेषु
सन्ततं स्वरैः सुतालसंगमोऽपि चीयते।।4।।

भ्रमरैश्च पद्मरेणुरंजितैस्तु यत्र–तत्र
चित्रिताल्पनाःविलोक्य हर्षो हृदि जायते।
कुमुदैरुपेतः स्वच्छसलिलः सरोवरस्तु
तारागणाकीर्णव्योमसन्निभः प्रभासते।।
शरदिन्दिराप्रदत्तधनधान्यतामवाप्य
प्रमुदितलोको भृशमद्य समाह्लादते।
व्योमतो धरातलेषु द्योतिता निशाकरेण
शारदोत्सवेषु दीपमालिका प्रकाशते।।5।।

'चरैवेति चरैवेति' घोषयन्त्यः सरितस्तु
जीवनं प्रवाहयन्त्यो मन्दं मन्दं प्रवहन्ति।
स्नाताः शोभिताश्च नभस्सानुपादपास्तथैव
धौतस्वच्छगात्रैर्निजसुषमां प्रदर्शयन्ति।।
नभसि धरायां कलकूजनैर्मृदुस्वनैश्च
सामगायने रताः द्विजाः मुदा च विचरन्ति।
स्वर्णशस्यपूरितानि ग्राम्यक्षेत्रवृन्दकानि
कमलासनायाः शारदोत्सवं समाचरन्ति।।6।। □

# इन्दिरा–दशकम्

मोतीमहाभागकुलस्य कान्तिः। या भारते भास्वरतां ततान।।
नीत्वा प्रकाशं शरदुत्सवानामिन्दुर्गता सा ननु देवलोकम्।।1।।

मन्दाकिनी पर्वतपुत्रिका या। भूमौ सदा सर्वहिते रताऽऽसीत्।।
दत्त्वाऽमृतत्वं च सुखं समृद्धिं। गंगा गता सा ननु देवलोकम्।।2।।

अखण्डदेशाय समर्पिता या। दृष्टिश्च या भारतलोचनानाम्।।
घोरान्धकारेषु विहाय देशं। दृष्टिर्गता सा ननु देवलोकम्।।3।।

प्रयोज्य सूत्राणि तु विंशतिर्नु। या सूत्रधारेव रराज देशे।।
नीत्वा स्वदेशञ्च विकासमार्गे। नेत्री गता सा ननु देवलोकम्।।4।।

यद्भाषणे कोटिजनाकुला वै। मौनंगतायां च जनाकुलास्स्युः।।
सुधारसैः सिंचति जीवनं या। वाणी गता सा ननु देवलोकम्।।5।।

शोकाकुलाः ये पदभक्तिरक्ताः। तेऽप्याकुलाः ये च विभक्तिरक्ताः।।
रक्षाकरस्यैव करैर्हता या। मूर्तिर्गता सा ननु देवलोकम्।।6।।

यावत्क्रिया पूर्णपदं न याता। तावत्कथं पूर्णविरामयोगः।।
कर्तव्यशून्यानि पदाश्च कृत्वा। क्रिया गता सा ननुदेवलोकम्।।7।।

आत्माहुतिं केशरवर्णकाय।श्वेताय शान्तिं हरिते समृद्धिम्।।
दत्त्वा त्रिवर्णाय समत्वधर्मं। दात्री गता सा ननु देवलोकम्।।8।।

निर्माय देशं सुदृढं च शक्तं। विश्वं तृतीयं परिपोष्य प्राणैः।।
रक्तैर्निजैर्देशरजः प्रसिंच्य। शक्तिर्गता सा ननु देवलोकम्।।9।।

मोतीचयैर्लालजवाहरैश्च। सुसेविता या कमलाकरेषु।।
राजीवरत्नं सुरभिं च दत्त्वा। लक्ष्मीर्गता सा ननुदेवलोकम्।।10।।

# रूपम्

विस्मारितमपि वसति नयनयोः
सखि! ते कियद् विचित्रं रूपम्।

शक्त्या यथा यथा विस्मरणम्
मनसा तथा तथा सुस्मरणम्।
शतशतचित्रैर्भ्रमयति चित्तम्
सखि! ते कियद् विचित्रं रूपम्।

उन्मीलितलोचनैर्न दृश्यम्
मीलितनयनैरेव सुदृश्यम् ।
सार्धं तमसा याति मनसि मे
सखि! ते कियद् विचित्रं रूपम्।

मम विश्वासं संयमवित्तम्
सखि! प्रत्यर्पय चोरितचित्तम्।
बद्ध्वा पाशे मां न मुंचति
सखि! ते कियद् विचित्रं रूपम्।

कृत्वा पंचशरैस्तु प्रहारम्
विजितं प्रेमरणं बहुवारम्।
तव क्रीडा मे सततं मरणम्
सखि! ते कियद् विचित्रं रूपम्।

लिखसि न पत्रं कालो यातः
वदति न संन्देशोऽयं वातः।
व्यथयति हृदयं तदप्यनंगः
सखि! ते कियद् विचित्रं रूपम्।

विस्मारितमपि वसति नयनयोः
सखि! ते कियद् विचित्रं रूपम्। □□

# प्रावृट्-गीतम्

आगता गर्जनैर्भीषयन्तो घनाः
किन्तु नैवागतो निष्ठुरो मे प्रियः।।

ग्रीष्मतापैः प्रतप्तं जगन्मण्डलम्
वारिबुन्दैः प्रलब्धं समाश्वासनम्।
आगताः श्याममेघास्तु वर्षासमं
किन्तु नैवागतो निष्ठुरो मे प्रियः।।1।।

कोकिलानां रुतं चाऽपि मौनं गतं
झंकृतिर्झिल्लिकानां मनो दूयते।
आगता युक्तकाले मयूरप्रियाः
किन्तु नैवागतो निष्ठुरो मे प्रियः।।2।।

'कुत्र वै मे प्रियः कुत्र वै मे प्रियः'
चातकानां ध्वनिर्जायते निष्फलः
आगता शर्वरी श्याममेघान्विता
किन्तु नैवागतो निष्ठुरो मे प्रियः।।3।।

कृष्णकेशा घना भान्ति चन्द्रानने
तारकैर्भूषिता विद्युदालोकिता।
अप्सरेवागता दिव्यवर्षा नवा
किन्तु नैवागतो निष्ठुरो मे प्रियः।।4।।

दर्दुराणां कुलं जीवनैर्जीवितं
हर्षिता यान्ति नद्यो प्रियं सागरम्।
आगता नृत्यलीना मयूरास्तथा
किन्तु नैवागतो निष्ठुरो मे प्रियः।।5।।

प्रार्थितो दौत्यकार्याय मेघो मया
पक्षिराजो मनः पक्षिणो वायवः।
मां समाश्वास्य सर्वेऽपि मौनं गताः
किन्तु नैवागतो निष्ठुरो मे प्रियः।।6।।

भावसम्पूरितं यन्मया कल्पितं
प्रेमपत्रं प्रदग्धं व्यथापावके।
मूकमामन्त्रणं प्रत्यहं प्रेषितं
किन्तु नैवागतो निष्ठुरो मे प्रियः।।7।।

संयमैर्रक्षितं धैर्यशीलं मनो
बाह्यतोशान्तमाभ्यंन्तरं दह्यते।
आगताः वह्निमादाय खद्योतकाः
किन्तु नैवागतो निष्ठुरो मे प्रियः।।8।।

वामनेत्रं तु प्रायः परिस्पन्दते
तत्फलं नैव किंचिन्मया लभ्यते।
आगता मद्व्यथायाः समुद्दीपकाः
किन्तु नैवागतो निष्ठुरो मे प्रियः।।9।।

## सूर्योदयः

विगतवपुषि सद्योऽज्ञानरूपेऽन्धकारे
उडुनिकरसमाने दुष्टवृन्दे विनष्टे।
हिमकणमयमुक्तामालिकावानुदेति
सपदि क्षितिजमध्यादेष राजर्षिभानुः।। □

# कर्म एव जयते

कर्म एव जयते।
कार्यं कुरु वा मर वा श्रम एव विजयते।।

कर्मप्रधाने विश्वे श्रम एवास्ति धनम्
हित्वा सर्वप्रमादान् कुरु पौरुषं श्रमम्।
कर्मादृते न मुक्तिर्जगति नरो वृणुते।। कर्म..

हस्तौ ते धातारौ पारसगुणयुक्तौ
सुखसृष्टेः कर्तारौ श्रिया सुसंपृक्तौ।
अपराङ्मुखश्च मानी निजकरमाश्रयते।। कर्म..

कर्मच्युतानां भाग्यं सर्वदैव शेते
कर्मपरायणमनुजो भवभूतिं लभते।
जन्मान्तरमपि याते कर्मफलं भुङ्क्ते।। कर्म..

वसुन्धरा श्रममूल्यैर्धनधान्यं यच्छति
यः कर्षति भवपाशः सः पारं गच्छति।
चरन्नरो वै रविरिव दिव्याभां तनुते।। कर्म..

इच्छाज्ञानमयी ते क्रियया वरणीया
समुन्नतिर्देशस्य सततं करणीया।
कर्मठवीरैर्विश्वे निर्माणं क्रियते।।
कर्म एव जयते।। □

# होरी

हो हो होरी  हो हो होरी।
नृत्यति श्यामा नृत्यति गौरी।। हो हो–––

प्राप्ते मधुमासे चतुर्दिक्षु  पुष्पाणां विभवः  सुखकारी।
कलिकानां ललितलास्यभावो सर्वेभ्यो मनोमुग्धकारी।।
मधुमत्तमधुपगुंजनैर्भाति नवमदनोत्सवोऽभिरामो री।। हो हो––

डफमुरजमृदंगवेणुप्रभृतीनां  नादैर्गुंजति परिवेशः।
करतालढोलतालैर्मग्नो नर्तने रतः निखिलो देशः।।
चित्रितसर्वांगैर्विविधविहंगैः क्रियते कलितनिनादो री।। हो हो––

काश्चिद् मधुमत्ता विजयोन्मत्ता हर्षनिमग्ना मुग्धमनाः
बहुकमनीयांगा नवलानंगाश्चपला ननु  प्रगल्भवचनाः
निजलोलापांगैर्मोहयन्ति प्रसरति सर्वत्र सुरागो री।। हो हो––

गुल्लालाम्बीरैरंजितचीरैर्बहुविशिष्टता संजाता
वेष्टितबहुरंगैर्वदनैरंगैरभिनवशोभा  संयाता
सुरबालाभिर्भूमौ रचितो रंगानामद्भुतोत्सवो री।। हो हो––

रंगैः सुस्नाताश्चित्रितगात्राः करयोः करयोः 'पिचकारी'।
क्रीडातत्पराः  युवत्यस्तासां  काकुविनोदः सुखकारी।।
काचित्सरला काचिच्चपला वाण्या वितनोति सुहासो री।।हो हो––

रम्या बालारंजनलीला यूनां तथैव  कामलीला।
कर्दमलिप्तानां  वृद्धानां  देवरवृत्तेर्महालीला।।
आबालवृद्धजनसम्मर्दो राजते यथा परिवारो री ।।हो हो–□

# भारत-महिमा (आल्हा)

गणनायक! गौरीतनय! लम्बोदर! विघ्नेश!
निर्विघ्नं कुरु जीवनं सर्वेषां सर्वेश!!
सर्वेषां सर्वेश! मनः क्रियतां निर्मलम्।
कोऽपि कदापि न त्रासयेत्क्वचिदपि तु निर्बलम्।
सर्वे त्यक्त्वा वैभिन्न्यं निवसन्तु विनायक!
बन्धुत्वं सर्वत्र भवतु लोके गणनायक!!

वाणीमातः! हे जगदम्बे! संशोभस्व सभायामत्र।
स्खलनं भवेद् यत्क्वचिदपि तत्सर्वं क्षमस्व सर्वत्र।।
सृष्टिर्येन मानुषी रचिता तिर्यग्भ्यो दत्तं जन्मानि।
जडजंगमजीवाः समस्ताः पृथिव्यां यस्य कर्माणि।।
येन निर्मितः संसारोऽयं तं परमेशमहं प्रणमामि।
सर्वेभ्यो जीवनं प्रदत्तं चैनं जगदीश्वरं नमामि।।
भारतवसुन्धरा सा धन्या देवेभ्योऽपि दुर्लभा याऽस्ति।
प्रसरति यस्या दिव्या कीर्तिः सा सर्वथा वन्दनीयाऽस्ति।।
नगाधिराजो हिमालयो हि भाले भाति गौरवो यस्य।
सततं चरणमार्जनं कुरुते नित्यं महासागरस्तस्य।।
अंचलमिव विस्तृता शोभना हरीतिमा सर्वत्र विभाति।
सलिलानां 'कल-कल'कलनादः स्वस्तिवाक्सदृशः प्रतिभाति।।
जातं ज्ञानरवेः समुदयं महिमामये प्रांगणे यस्य।
महिमानं गौरवं महत्त्वं वक्तुं नैव शक्यते तस्य।।
धर्मक्षेत्रभाषाणां भेदाः वर्णजातिभेदाः सन्त्यत्र।
सर्वे चैक्यसूत्रसम्बद्धा निवासिनो वसन्ति सर्वत्र।।
देवगणा गौरवाभिभूताः संगायन्ति यस्य गीतानि।
तपस्विनां योगिनां मुनीनां प्रेरयन्ति पावनचरितानि।।
कृष्णस्यास्ति कर्मभूमिर्या लीलाभूमिः श्रीरामस्य।
भूयो भूयस्तां नमामः भवेज्जयो भारतवर्षस्य।।□

# तृतीयो भागः

## वार्ताः

## मूर्ख-लक्षणानि

**एकदन्तं नमस्कृत्य ब्रह्मतनयां च शारदाम्।**
**कथयामि 'मूर्ख–चिह्नानि' संत्यजेदात्मवान्नरः।।**

जगति मूर्खाणां द्वौ प्रकारौ -- सामान्यश्चैकः स्वधीतश्चापरः। सामान्यमूर्खो हि-- जन्मदातृपितरावमन्यते,भार्यामेव सन्मित्रमिति मन्यते, बान्धवान्त्यक्त्वा भार्याऽधीनः वसति, स्वानि सर्वरहस्याण्येनां प्रति प्रोद्घाटयति। परदाररतिरतः, श्वसुरगृहवासी, अचिन्त्यैव कन्यापरिणयकर्ता, अपक्वबुद्धिः, विवेकशून्यः, हीनबलोऽपि समर्थजनसमक्षमभिमानबहुलः, स्वाधिकारजातप्रसारकोऽसक्तोऽपि प्रशंसकविरहितोऽप्यात्मगुणगणप्रचारकः, वेश्येव स्वार्थमात्रतत्परः, छुद्रविषयेष्वप्यतिकृपणः, कलहप्रियः, आलस्यस्य साक्षादवतारः, सुतरांनिद्रातन्द्रिलः बाहुल्येन हीनक्रियश्च ।अकारणमेव हसति; शिवोपदेशं न शृणोति; स्वबान्धवान्हित्वाऽन्यैः सह सख्यं कुरुते । जाग्रत्येव जनसमुदाये स्वपित्यसौ; परगृहं गत्वा बहु भुङ्क्ते; स्वमानापमानविषयाणि स्वयमेव सर्वान्प्रकटयति; स्वगृहचतुष्पथादिषु बहु जल्पति; द्यूतवेश्यागमनचौर्यपरिवादपरस्त्रीगमनलघुपक्षीक्रीडाकिन्नरीगायनेति सप्तव्यसनेषु रमते। सभायां साक्षादिव मौनं तूष्णीमेव तिष्ठति; बुद्ध्यादिना श्रेष्ठैः सह स्वबालसखेव व्यवहरति; ये तस्योपदेशं प्रत्यन्यमनस्कास्तानेव संश्रावयति; विद्वद्वरेषु ज्ञानं प्रदर्शयति; वाग्जालेन जनान्वञ्चयति; निर्लज्जतयाऽमर्यादितो भवत्यसौ विषयवासनासु; रुग्णोऽप्यौषधसेवनं न कुरुते,पथ्यं समयं च न जानाति; सहजप्राप्याः पदार्थाः न रोचन्ते; लोभाऽकृष्टचित्तो विश्वसित्यज्ञातं नरम्नेन सह यात्रामपि करोति, वृद्धिंगतां नदीं प्रविशति; मानापमानं नैवावगम्यते; सर्वकालं शोचति, यं कमपि कारणमज्ञात्वैव दण्डयति; देवपितृन्न गणयति; गृहे सर्वदा सिंहेव गर्जनं तर्जनं च कुर्वन्वराकः गृहाद्बहिर्भाषणेषु बहु लज्जते; नीचैः सह विहरति; परस्त्रीभिः सहैकान्ते वर्तयति; गच्छन्नपि

खादति; जल्पन्नपि हसति; द्विपुरुषसंभाषणेऽनाहूतो तृतीयो भवति; कृतघ्नः परोपकारं न गणयति; कृतोपकारमपकारैः पूजयति; सर्वकर्महीनोऽपि स्वकर्तृत्वमत्यधिकं भाषते; क्रोधीवाग्मीकुटिलोऽधैर्यवांश्चभवति; विद्यावैभवधनपौरुषसामर्थ्यहीनोऽपि दर्पयति; क्षुद्रोऽलीककपटीकुकर्म्युद्धतश्च क्रोधापमानादिकुबुद्धिभिरात्महत्यां घटते; प्रियेषु प्रियतरेषु च दुःखमेव वितरति; कदाचिदपि न भाषते प्रसादवचनम्; नीचान्वन्दयति, स्वरक्षांप्रति बहु यतते; शरणागतं त्यजति; लक्ष्मीं बहु मन्यते; ईश्वरं न गणयति; पुत्रदारामेवसर्वमवगच्छति; कर्मविपाकमजानन्पापकर्मफलनिश्चिन्तो भवति; बहुविवाहेनानेकस्त्रीरतिरतः; दुर्जनप्रेरितः मर्यादामुल्लंघयति; भूतभविष्यचिन्तया वर्तमानं न साधु भुङ्क्ते; देवमातृपितृगुरुब्राह्मणस्वामिभ्यश्च द्रुह्यति; दुःखग्रस्तमन्यं दृष्ट्वासुखमनुभवति; दृष्ट्वाऽन्यस्य सम्पत्तिं शोचयति; अनिवेदितो वदति; अनाहूतो साक्ष्यं ददाति; निंद्यवस्तूनि गृह्णाति; यैरपमानितो भवति तैरेवाभिरमते वार्तासु; सत्यं मर्यादां वा न पालयति; सदोपहसन्नन्यानन्यैरुपहसितः कलहोद्यतः वैरं करोति; वृथैव स्पर्धां करोति; शास्त्रज्ञानहीनोऽपि कुचैली अपि सभायामुच्चासनमधितिष्ठति; वामहस्तेन भुङ्क्ते; श्रेष्ठान्प्रति मत्सरं कुरुते; अलभ्यं कामयते; स्वगृहे एव चौर्यं करोति; जगदीश्वरं हित्वा मानवाश्रयं विश्वसिति; सांसारिकदुःखव्याजेन ईश्वरमशोभनशब्दैः पूजयति; स्वमित्रहीनतां सर्वत्र प्रकाशयति; मित्रस्य गुह्यं न गुह्यति; सदात्युग्रो विश्वासघातकश्च भवति; येन गतेन सभाशोभा नश्यति; गिरगिटमिव प्रतिक्षणं स्वरूपं विपरिवर्तते; पटुस्वभावानपि सेवारतभृत्यान् स्वचंचलताग्रासान्कृत्वाऽन्यान्नव्यान्योजयति; परकीयाकृते स्वकीयां त्यजति; स्वधनमन्यसात्कृत्वा स्वकार्यहेतोः ऋणं गृह्णाति; अतिथिकष्टकारकः कुग्राममधिवसति; द्वाभ्यां हस्ताभ्यां कपालं पादेन पादं च कण्डूयते; परदाराभिमुखीभूय मिथ्याभिमानेन दर्दुर इव टरटरायते; अद्यतनमर्यादारक्षायै श्वपालनं करोति; अविद्वद्भिः सह रमते; सत्यं हित्वा मिथ्यामाचरति; अनायासधनलाभेन मत्तो स्वातीतं विस्मरति; देवब्राह्मणेष्वधिकारमभिलषति, स्वार्थेऽतिनम्रः परार्थे क्रूरतरः; पठनसमयेऽक्षराणि खादित्वा खादित्वा मितभाषी भवति वा योजयित्वा योजयित्वाऽक्षराणि बहुश्रुतान्करोति श्रोतॄन् ।

तथा हि स्वधीतमूर्खः --- कामक्रोधमदमत्सरलोभाकृष्टचित्तः

दम्भतिरस्कारगर्वाहंकारद्वेषविषादविकल्पाऽऽशातृष्णाकल्पना-चिन्ताऽहंमन्यताकामनाभावनाऽसूयाऽविद्याकुवासनाऽत्यासक्ति-दुष्टताऽनीतिप्रमत्तताऽवज्ञाविपत्तिदुर्वृत्तिस्पर्धाऽऽदि- कुविद्याव्यथाभिर्युक्तः; दुर्जनः; दरिद्रः; कृपणः; क्रोधी; अलीकवादी; उग्रः; वाचालश्च । स न किमपि जानाति, न शृणोति, नावगच्छति, नचावगन्तुं यतते । पौरुषहीनोऽपि वक्रः अप्रामाणिकमपि सम्पूर्णशक्त्या वदति; दुष्टश्चासौ प्रलम्बविवेकवार्तां कुरुते; क्षुद्रोन्मत्तः यायावरोऽपि स्वपराक्रमं बहु जल्पते। सोऽज्ञानी, वंचकः, हिंसकः, गर्वी, विषयासक्तः, निर्लज्जः, ऋणग्रस्तः, अल्पमतिः, विवादरतः, शब्दवज्रैः परेषां हृदयानि क्लिश्नाति; वार्तावस्तुविषयान्तरनयने पटुः, परिवादने विशेषरुचिं दर्शयति; अशुभं वदति, किमपि कथयित्वा विस्मरत्यस्वीकरोत्यन्यथा च कथयति।

कुटिलः कृष्णमनस्तामसी च भवति; महापापी पतितः कुपात्रः कुतर्की मित्रद्रोही, विश्वासघातकश्च भवति; सन्देहमात्रेणैव कलहं करोति; परसुखासहिष्णुः, स्वार्थी लोभी शठलुञ्चपाखण्ड-स्वेच्छाचारी बीभत्सहास्यकरः, लम्पटः उद्धतो भ्रष्टो दुर्बुद्धियुक्तो च भवति । न संयमं, न प्रसंगं, न प्रयत्नं, नाध्ययनं, न मैत्रीं जानाति; प्रत्यक्षे प्रियंवदति, परोक्षे परिवदति, यत्कथयति तन्न करोति, स्वभावैः व्यवहारैश्च बाह्यरूपेण यद्मन्यते हृदयेन तत्सर्वं त्यजति करोति चान्यथा । इति मूर्खलक्षणानि ।।

अथ विद्वद्भिः कथिताः केचनसंग्रहश्लोकाः उदाहार्याः :----

मूर्खस्य पञ्चचिह्नानि गर्वो दुर्वचनं तथा ।
हठश्चैव विषादश्च परोक्तं नैव मन्यते ।।
असत्यप्रलापः पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र! न जल्पेन्नैव चिन्तयेत्।।
दम्भोदर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्।।
वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।
न मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि ।।

-----o------

# संस्कृतवाङ्मये राष्ट्रैक्यभावना

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।
पूर्वापरो तोयनिधी वगाह्य
स्थितः पृथिव्यामिव मानदण्डः।।

न केवलं भारते अपितु विदेशेष्वपि लब्धकीर्तिः कविकुलगुरुकालिदासः 'कुमारसम्भव'मिति महाकाव्यस्य प्रारम्भे हिमालयस्य दिव्यतामुच्चतां विशालतां गुरुतां प्राकृतिकवैभवञ्च निरूपयन् भारतदेशस्य विशालाकारं गौरवं महिमानं संस्कृतेरुच्चादर्शान् राष्ट्रस्यास्य भौगोलिकसांस्कृतिकमैक्यं प्रादर्शयत्। हिमालयस्यायं विस्तारस्तस्य एकत्वञ्च वस्तुतः भारतदेशस्य संस्कृतेर्विस्तारं तथा सांस्कृतिकीमेकतामेव निरूपयति। हिमालयाद् निःसृत्य गंगा न केवलं समृद्धेरपितु सांस्कृतिकीमेकताभावधारां प्रवाहयन्ती प्रवहति यथा-- 'गंगोत्रीजलमादाय रामेश्वरमर्चयन्ति जनाः।' प्रदेशानां वेषाणां भाषाणां धर्माणां भिन्नतास्वपि सर्वं भारतं सुदृढे आन्तरिकसूत्रे निबद्धमस्ति।

भारतीयसांस्कृतिकैक्यस्य केन्द्रीभूतायां संस्कृतभाषायां निबद्धे साहित्ये राष्ट्रियभावनायाः चित्रणं सर्वत्र व्यापकत्वेन दरीदृश्यते। आर्षसाहित्यस्य प्राचीनतमे ग्रन्थे ऋग्वेदे समृद्धराष्ट्रस्य परिकल्पना तात्कालिकीं राष्ट्रियचेतनां देशभक्तिं चोद्घाटयति। ऋग्वेदस्य दशममण्डलस्य वाक् सूक्ते वर्णितो भावो वर्णनीयोऽस्त्यत्र--

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा याज्ञियानाम्। ऋग्वेद 10/124/3 अत्र वाग्देवी राष्ट्रवासिनां संघटनकर्त्री राष्ट्रशक्तिरेवास्ति। वस्तुतः वागृम्भणी सूक्तं राष्ट्रस्य संघटनशक्तेः माहात्म्यं निरूपणाय एवास्ति। एवमेव

'संघटनसूक्तम्' संघटनशक्तेः महत्त्वं प्रतिपादयति राष्ट्रैक्यभावसंवर्द्धनाय प्रेरयति च :–––––

ॐ सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।
देवाभागं यथापूर्वे सं जानाना उपासते।। 10/191/2
समानो मन्त्रः समितिः समानी,समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि।। 10/191/3
समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु नो मनो यथा वः सुसहासति।। 10/191/4

अत्र ऋषिः सर्वेषां सहभावं सौमनस्यं चाभिकाङ्क्षति। मन्त्रेष्वेषु न कुत्राऽपि जातिवैषम्यं वर्गविद्वेषं प्रतिभाति। वैदिकर्षिः सर्वेषां प्रति समानभावं प्रदर्शयति। अन्यत्र गुरुरपि शिष्यान् एवमेव प्रबोधयति :–

सह नावतु सह नौ भुनक्तु सह वीर्यं करवावहै
तेजस्विनावधीतमस्तु मा विद्विषावहै।।

अत्र न केवलं शिष्याः अपितु देशवासिनोऽपि एकतायाः पाठं पाठिताः यत्ते पारस्पारिकं द्वेषभावं भेदभावञ्च विस्मृत्य सहयोगभावनां विवर्द्धयन्तु।

'ॐ ईशावास्यमिदं सर्वं यकिंञ्च जगत्यां जगत्' इति भावनया वैदिकर्षिः ईश्वरनिर्मितायां सृष्टौ सर्वत्रैव समभावनां वाञ्छति। 'एकोऽहं बहुस्यामि'ति मन्त्रेऽपि एकस्य बहुरूपता भिन्नता वा विभिन्नतासु अनेकतासु च एकत्वमेव सन्दर्शयति; यतः एका एव प्राणधारा सर्वभूतेषु प्रवहति;सैव सर्वान् ऐक्ययूत्रे निबध्नाति। यथा यजुर्वेदे :–

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते।। 40/6 यथा–
यस्मिन् सर्वाणि भूतान्यात्मैवाभूत् विजानतः
तत्र को मोहः कः शोकः एकत्वमनुपश्यतः।। 40/7

अथर्ववेदे 'माता भूमिः पुत्रोऽहं पृथिव्याः' 12/1/12

—इति कथयित्वा पृथिव्याः मानवानां किंवा पृथिवीपुत्राणां भावात्मिकी एकता संदर्शिता तथा 'वयं राष्ट्रे जागृयाम पुरोहिताः' 12/1/62

इति मन्त्रेऽपि 'वय' मिति समूहवाचिशब्देन राष्ट्रैक्यभावनायाः राष्ट्रकृते सामूहिकदायित्वभावनायाश्च निदर्शनं दृश्यते।

छान्दोग्य उपनिषदि 'सर्वं खल्विदं ब्रह्मे'ति 3/14/1 उद्घोष्य जगदिदम् ब्रह्मस्वरूपं निगदितमस्ति; तत्र सर्वत्रैव अभेदः प्रतिभाति। एवमेव श्वेताश्वरोपनिषदि सर्वभूतेषु एकदेवस्यैव व्यापकत्वं तेषामान्तरिकैक्यं विहितमस्ति—–

एको देवः सर्वभूतेषुगूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षीचेता केवलो निर्गुणश्च।। 6/11

राष्ट्रियैक्यभावनायाः मूले आत्मगौरवभावना, राष्ट्ररक्षार्थं संघटितोत्साहभावना च कार्यं करोति। आर्यराष्ट्रस्य गौरवस्य रक्षार्थमेव भगवता रामेण अनार्यो रावणो हतः। तेन भल्लूकवानराणां संघटितबलेनैव महत्कार्यमिदं सुसम्पादितम्। 'जननीजन्मभूमिश्च स्वर्गादपि गरीयसी' इति भावनया आदिकविना रामायणमहाकाव्ये राष्ट्रभक्तिभावनायाश्चित्रणं कृतमस्ति।

सामाजिकविग्रहं मानवीयभेदभावान् च दूरीकर्तुं समत्वभावनायाः विकासार्थं, संघटनमाहात्म्यं प्रकाशयितुञ्च स्मृतिकारैः सामाजिकमर्यादाः प्रतिष्ठापिताः। यथोक्तं भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम् —–

मत्तः परतरं नान्यत् किञ्चिदस्ति धनंजय!
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।। 7/7

श्लोकेस्मिन् भगवतः स्वरूपमिदं—–'ऐक्यसूत्रे निबद्धाः सर्वे देशवासिनो मिलित्वा प्रेम्णा निवसन्तु'—इति सन्देशमातनोति। मानवीयसमतायाः राष्ट्रैक्यभावनायाश्च चित्रणं चित्रितमस्त्यत्र। यथा—–

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः।।

अत्र 'पण्डिताः' इति शब्देन 'बुद्धिमन्तः राष्ट्रवासिनः 'इत्यर्थः विवक्षितोऽस्ति; समदृष्ट्या सर्वेषां माङ्गल्यं संकल्पितमस्ति, वस्तुतः भगवतः श्रीकृष्णस्य विराट्रूपं, राष्ट्रैक्यस्यैवोपलक्षणम्। महाभारतयुगस्य अमानवीयोऽध्यायः देशस्यास्य, राष्ट्रैक्यभावनोपरि भीषणकुठाराघातः एवास्ति। पारस्परिककलहस्य परिणामो देशवासिनः ऐक्याय शिक्षयति सम्प्रेरयति च। वस्तुतः अस्माकं संस्कृतिः 'वसुधैव कुटुम्बकम्' इति भावनाशक्त्या, राष्ट्रैक्यं प्रतिपादयति––

अयं निजः परो वेति गणना लघुचेतषाम्
उदारचरितानां तु वसुधैव कुटुम्बकम्।।

सर्वे प्राणिनः आत्मनो हितं प्रकृत्यैव वाञ्छन्ति, किन्तु नास्त्यत्र 'स्व–पर'इति भावनायाः स्थानम्। राष्ट्रियैकतां मनसि विधाय भारतीयाः आत्मना सह अन्येषामपि माङ्गल्यं काञ्छन्ति। एवमेव संघटनशक्तिः दृढीभवति। चाणक्यनीतौ संघटनशक्तेः महत्त्वमेवं निगदितं यथा–

बहूनां चैव सत्त्वानां समवायो रिपुञ्जयः।
वर्षन् धराधरो मेघस्तृणैरपि निवार्यते।।

आपात्काले राष्ट्रवासिनामैक्यभावना अनायासेनैव विवर्धते। वस्तुतः राष्ट्रानुरागः राष्ट्रियैक्यभावनां सुदृढ़ीकरोति। भासकृते प्रतिज्ञायौगन्धरायणनामके नाटके एवमेव राष्ट्रभक्तिः राष्ट्रियैक्यस्याऽह्वानं करोति––

नवं शरावं सलिलैः सुपूर्णं, सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेत् यो भर्तृपिण्डस्य कृते न युध्येत्।।

अत्र 'भर्तृ'शब्दो वस्तुतः राष्ट्रस्यैवार्थे प्रयुक्तोऽस्ति; यथोक्तं महाकविना कालिदासेन रघुवंशनाम्नि महाकाव्येः–

प्रजानां विनयाधानाद्रक्षणाद् भरणादपि।
स पिता पितरस्तेषां केवलं जन्महेतवः।।

अत्र शब्दोऽयं देशभक्तिं राष्ट्रैक्यं च प्रदर्शयति। महाकविना अभिज्ञानशाकुन्तले वर्णितं राज्ञः स्वरूपं तस्य लोकबन्धुत्वं

प्रमाणीकरोति। यथा——

'प्रजाः प्रजाः स्वा इव तन्त्रयित्वा '5/5 अथवा 'अतनुषु विभवेषु ज्ञातयः सन्तु नाम। त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम्।'5/8 तथा—

येन येन वियुज्यते प्रजाः स्निग्धेन बन्धुना स स पापादृते तासां दुष्यन्त इति घुष्यताम्। 6/23 यतः सर्वाः प्रजाः राज्ञः एव कुटुम्बकं ततो अस्मादपि अधिका राष्ट्रैक्यभावना असम्भाव्या एव। महाकविना भारविनाऽपि किरातार्जुनीये एवमेव राष्ट्रैक्यभावनायाः वर्णनं कृतं——
'सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः'।।

अत्रेदं ज्ञायते यत् प्रजासु, नृपेषु अमात्यवर्गेषु च यदा ऐक्यमत्यं भवेत्तदैव राष्ट्रस्य कल्याणं भविष्यति। वैदेशिकसंक्रमणकाले राष्ट्रभक्तानां हृदयेषु यद्राष्ट्रियभावोद्रेकः समुल्लसति स्म तत्तु सर्वथा वन्दनीयोऽस्ति। स्वातन्त्र्यभावनायाः विकासाय, राष्ट्रैक्यभावनायाः दार्ढ्याय 'आङ्लाः त्यजत भारतम्' 'भवेद् भारतं भारतम्' तथैव 'वन्दे मातरम्' इत्यादि संस्कृतगीतानां प्रभावः सर्वविदित एव। अस्मिन् काले आङ्लसत्तां निर्मूलीकर्तुं देशवासिनां हृदयेभ्यः धर्मजात्यादिकं पारस्परिकभेदभावं निरस्य राष्ट्रैक्यमूलां प्रेरणां विधातुं अनेकानि देशभक्तिभावभरितानि गीतानि विरचितानि। 'शारदा' इति पत्रिकायां प्रकाशिता विद्यावाचस्पतेः शालग्रामशास्त्रिणः 'प्रबोधनम्' इति रचना समुल्लेखनीया, यत्र सः पारस्परिकभेदभावं परित्यज्य स्वकीयेन पौरुषेण विवेकेन संघटनशक्त्या परतन्त्रतायाः अर्गलात्रोटनार्थं भारतीयान् प्रबोधयति— 'शिवपावनं त्वदंगं न विदेशिवस्तुभारैः
यदिमे विलाञ्छयेयुर्ननु दुःशकं किमस्ति'।
भज संघशक्तियोगं त्यज भूरिभेदरोगं
परिलप्स्यते सुयोगं स्वाभिमानरक्षितोऽसि।।

भारतगीतिकायां पं0 रामावतारशर्माऽपि भारतीयानां हृदयेषु प्रकृष्टनिष्ठायाः जागरणं कुर्वन् समन्वयात्मिकीं दृष्टिं अवलम्ब्य प्रदेशजातिभाषादीनां वैमनस्यं त्यक्त्वा राष्ट्रैक्यार्थं भृशं यत्नपरो दृश्यतेऽत्र–

अलं भारतीयाः मतानां विभेदैरलं देशभेदेन वैरेण चालम्।
अयं शाश्वतो धर्म एको धरायां न सम्भाव्यते धर्मतत्त्वेषु भेदः।।
कलिङ्गाङ्गवङ्गान्ध्रकद्राविडादीन् उपाधीन्विहायैक्यमालम्ब्य भूयः। अये भारतीयाः पुरेवाऽऽत्मरूपं लभध्वं यशश्चन्द्रशुभ्रं तनुध्वम्।।

पण्डितप्रवरेण अम्बिकादत्तव्यासेन विरचितः 'शिवराजविजयमि'ति सुप्रसिद्धोपन्यासः राष्ट्रभक्तिभाव–पूरितोऽस्ति। एवमेव शठकोपविद्यालंकारेण विरचितं 'भारती विजय'नामकं एकांकिरूपकं विविधानां भारतीयभाषाणां मानवीकरणं विधाय तासु पारस्परिकं कलहचित्रणं करोति। अन्ततः सरस्वती देवी समागत्य भारतीयभाषाभ्यः पारस्परिकसम्मानस्य समत्वस्य चोपदेशं दत्त्वा ताः आङ्लभाषादासत्वेन मोचयति। रूपकेऽस्मिन् भारतीयभाषासमस्यासमाधानेन सह राष्ट्रियैक्यस्य पाठः पाठितः।

डॉ0 रमाकान्तशुक्लस्य 'भाति मे भारतम्' इति शतककाव्यं अत्रोल्लेखनीयमस्ति, यत्र प्राचीनकालादारभ्य आधुनिककालपर्यन्तं भारतस्य वैशिष्ट्यवर्णनव्याजेन कविः आत्मगौरवं राष्ट्रियभावनाञ्च वर्णयति––

विश्वबन्धुत्वमुद्घोषयत्पावनं विश्ववन्द्यैश्चरित्रैर्जगत्पावयत्।
विश्वमेकं कुटुम्बं समालोकयद् भारते भाति मेऽनारतं भारतम्।।

सः भारते भगवतो विश्वेश्वरस्य दर्शनं कृत्वा समग्रभूमण्डलस्य शृंगारभूतं भारतं श्रद्धया नमस्करोति–

भारताद् भाति मे भूतलं भूतलं भारतस्य प्रतिष्ठास्ति मे मानसे।
भारतेऽहं प्रपश्यामि विश्वेश्वरं भारत! क्षोणिशृंगार! तुभ्यं नमः।।

आचार्यो रामसुमेरः 'मातृभूमिमहिमा' इति गीते भारतीयराष्ट्रैक्यभावनायाः संगायनं करोति–यथा––

'अनेके प्रदेशाः मतानां विभेदाः स्वधर्मानुरक्ताः समे भारतीयाः।
अनेके नु वेषाः ह्यनेके स्वरूपाः तथाप्येकतायां स्वदेशे वसामः।।

किमधिकं संस्कृतसाहित्ये पदे पदे 'संहतिः कार्यसाधिका' तथा 'संघे शक्तिः कलौ युगे' इत्यादीनि सूक्तिवाक्यानि समुल्लिखितानि सन्ति। विशाले संस्कृतवाङ्मये राष्ट्रैक्यधारेयं सततंप्रवहमानाऽस्ति; देशभक्तिभावनाभरितमिदं विपुलसाहित्यञ्च।

भारतीयसंस्कृतेः ऐक्यार्थमेव जगद्गुरुशंकराचार्येण देशस्य चतुर्षु दिक्षु चत्वारः पीठाः संस्थापिताः। महाकुम्भपर्वसु हरद्वारे, उज्जयिन्यां, नासिके, प्रयागे च महत्सु जनसम्मर्देषु राष्ट्रियैक्यस्य भावना सुदृढीभवति। जनाः सर्वान् भेदभावान् विस्मृत्य समभावैः मिलन्ति। वस्तुतः राष्ट्रैक्यभावना प्रदेशक्षेत्र– धर्मवर्णजातिभाषादीनां संकीर्णभावनाभ्यः उपरि उत्थाय बृहद्मानवीयधर्मं स्थापयति। किं बहुना--

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।

श्लोकोऽयं सर्वेषां कल्याणार्थमभिमन्त्रयति। 'सर्वे राष्ट्रवासिनः परस्परं मिलित्वा निवसन्तु,सर्वेषां मंगलाय संकल्पं कुर्वन्तु'इति।

अन्ते नवल किशोर काङ्कर महाभागविरचिता 'राष्ट्रगायत्री'राष्ट्रानुरागविवर्धनाय राष्ट्रियैक्यभावनाविकासाय च प्रस्तूयते--'ऊँ भूः भुवः स्वः महो राष्ट्रस्य धीमहि वरीयो द्युम्नवर्धनम्। धियस्तन्नः प्रशोधयात्।'

अर्थात्-- वयं भारतीयाः यशवैभवादिवृद्धिकारकं सर्वोत्कृष्टं विशालज्योतिः नमामः तत् परमज्योतिरस्माकं कार्यान् धियश्च पावयेत्।

--0--

# सुहासिका

## प्रथम भाग (हास्य-व्यंग्यकाव्यम्) का भावार्थ

**श्री गणेश स्मरण :-**

उन गणेश जी को नमस्कार है ,जो अपने वाहन चूहे को देखकर प्लेग हो जाने की आशंका से अत्यधिक भयभीत एवं पीड़ित होकर उससे दूर भाग रहे हैं।

**चमचा वन्दना :-**

हे चमचा देव! आप विघ्नेश्वर हैं, वरदायक हैं, जनप्रिय हैं, सदा स्वार्थ में तत्पर हैं, नवनीत लेपन (चाटुकारिता) में पटु हैं, सौम्य हैं, चारण-सुत की तरह यजमान का गुणगान करते हैं, धनादि प्राप्तकर अपना घर भरते रहते हैं, आप सहज सिद्धि प्रदायक हैं, आपको पुनः पुनः नमस्कार है।

**श्रोता वन्दना :-**

जिनके द्वारा नाना प्रकार के रसों का विचित्र मिश्रण साहस पूर्वक पान किया जाता है , जो कवि के प्रहारों को झेलकर भी जीवित रहते हैं; ऐसे सम्मानित श्रोतागणों को नमस्कार है।

**भ्रष्टाचार स्तुति :-**

रिश्वत जिसका श्रेष्ठ मित्र है, धूर्तता जिसकी जीवन संगिनी है, स्वार्थ जिसका गुरु है, मैं उस भ्रष्टाचार को भजता हूँ।

**चाय-स्तोत्र :-**

त्रेता में राम-रावण युद्ध के समय लक्ष्मण के मूर्छित हो जाने पर सुषेण वैद्य के निर्देश पर हनुमान के द्वारा जो बूटी लायी गयी थी, वही बूटी चाय कहलाती है।

अथ स्तोत्र :- कार्यालय और घर में सर्वानन्द करने वाली, अति शीघ्र स्फूर्ति प्रदान करने वाली हे चाय देवि! आपको नमस्कार है।।1।। हे ज्ञान और शक्ति देने वाली माता! आप सर्वत्र पूज्य हैं, आपके बिना स्वागत व्यर्थ है; हे चाय देवि! आपको नमस्कार है।।2।। नगरों में कप भर और गाँवों में घट (लोटा) भर पी-पी कर सभी अत्यधिक हर्षित होते हैं; हे चाय देवि! आपको नमस्कार है।।3।। कभी लिपटन, कभी टाटा, कभी ताजा रूपों में और कभी कॉफी रूप में रहती हो; हे चाय देवि! आपको नमस्कार है ।।4।। उत्सव में-विपत्ति में और निर्धनों में-धनवानों में आपको सर्वत्र समान आदर प्राप्त होता है; हे चाय देवि! आपको नमस्कार है।।5।। चाय (के आमन्त्रण) पर प्रेम का प्रादुर्भाव हो जाता है तो कभी चाय पर ही दुष्कर सन्धि-विग्रह भी सम्भव हो जाते हैं; हे चाय देवि! आपको नमस्कार है।।6।। हेमन्त ऋतु में जैसे भार्या का संयोग सदा सुखकर होता है उसी प्रकार आप भी शीत के प्रकोप का

हरण कर सदा सुख देती हैं; हे चाय देवि! आपको नमस्कार है।।7।। राष्ट्रीय एकता को सुदृढ़ करने वाली चायशाला धन्य है। आप सभी प्रकार के भेद भावों को मिटाने वालीहैं; हे चाय देवि! आपको नमस्कार है।।8।। प्रातः, सायं–काल, प्रति दिन, प्रति रात्रि और प्रति क्षण सभी मनुष्य आपको निरन्तर भजते हैं; हे चाय देवि! आपको नमस्कार है।।9।। चाय नामक बूटी हर्ष, प्राण, चेतना और यौवन को देने वाली है जो नर भक्ति से इसका सेवन करता है, वह कभी बूढ़ा नहीं होता ।।10।।

**खटमल स्तोत्र :–**

रात्रि में निद्रा सुख के नष्ट हो जाने पर शय्या के विघ्नों की शान्ति के लिए भार्या और पुत्रों के साथ मैं खटमल देव को भजता हूँ।

अथ खटमल स्तोत्र :–

जिसकी निर्बाध गति का स्वर्ग और नरक में संगायन किया जाता है ऐसे देवाधिदेव खटमल देव को नमस्कार है।1। जो योगी, भोगी और गृहस्थ सभी को अनुराग करता है उस रक्तवर्णी खटमल देव को नमस्कार है।2। जिसके किले गुप्त होते हैं, जिसकी रणयोजना भी गुप्त होती है ऐसे दस्यु सम्राट खटमल देव को नमस्कार है।3। जो मरने पर शीघ्र ही पुनः जीवित हो जाता है, जिसका कभी नाश नहीं होता ऐसे रक्तबीज रूप खटमल देव को नमस्कार है।4। जिसने अपने परिवार का विस्तार कर परिवार नियोजन की धारणा को ही व्यर्थ कर दिया है ऐसे कलियुग के रावण खटमल देव को नमस्कार है।5। चाहे कोई जिए या मरे–पूँजीपतियों की तरह शोषण करना, रक्त चूसना जिसके जीवन का मूल मन्त्र है ऐसे खटमल देव को नमस्कार है।6। जो मच्छर का चाचा और बिच्छू का मामा है ऐसे खलाधिराज खटमल देव को नमस्कार है।7। जो भोजन मिलने पर बहुत खाता है और अनशन रहने पर भी सुदीर्घ काल तक जीवित रहता है ऐसे योगिराज खटमल देव को नमस्कार है।8। जो दूसरों का रक्त चूस कर उन्हें अन्तर्दग्ध करता है ऐसे दहेज दानव रूप खटमल देव को नमस्कार है। 9। दूसरों की शय्या का रस चूस कर जो चौर्यभाव से भाग जाता है ऐसे जार रूप खटमल देव को नमस्कार है।10। जिससे भयभीत हो कर विष्णु क्षीरसागर और महेश कैलास पर्वत पर निवास करते हैं ऐसे त्रैलोक्य विजेता खटमल देव को नमस्कार है।11। जिसकी मनोहर सूँड़ 'इन्जेक्शन' जैसी सुशोभित होती है ऐसे ज्ञानी डॉक्टर खटमल देव को नमस्कार है।12। जिसने शय्या के चारों पायों को अपना निवास बनाकर उन्हें चारोंधाम की प्रतिष्ठा दी है ऐसे श्रेष्ठ तपस्वी खटमल देव को नमस्कार है।13। शय्या और घर सदैव जिसके अधीन रहते हैं ऐसे सर्वव्यापक खटमल देव को नमस्कार है।14। शय्या के निकट बैठकर खटमल स्तोत्र आख्यान का जो प्रीति पूर्वक निरन्तर पाठ करता है निद्रा देवी उस पर प्रसन्न होती है ।15।

**सत्यं शिवं सुन्दरम् :–**

जो कुछ पुलिस जन कहता है वह सत्य है,जो नेता के द्वारा कहा गया वह सभी शिव है, वह सब कुछ अभिनन्दनीय और सुन्दर है जो

